॥ श्रीः ॥

# विक्रान्तकर्णम्

—०—

प्रणेता

आचार्य डॉ० वनेश्वरपाठकः,
एम० ए० (हिन्दी संस्कृत) डी० लिट्०
(उत्तरप्रदेशशासनद्वारा साहित्यिकपुरस्कारेण सम्मानितः)

भू० पू० संस्कृतविभागाध्यक्षः
सेंट जेवियर्स कॉलेज, राँची, बिहारः, (भारतम्)

शास्त्रचूडामणिः

कामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालयः
दरभंगा (बिहारः)

प्रथमं संस्करणम् १९९० खीस्तवर्षम् ।



—०—

मूल्यम्- १५/- रूप्यकाणि

डॉ० वनेश्वरपाठक, संस्कृतसदनम्, इर्गू रोड, पहाड़ीसाइड, राँची,
द्वारा प्रकाशितम् एवम् अमर प्रिन्टर्स, राँची द्वारा मुद्रितम्
१९९० ई० ।

# विक्रान्तकर्णम्

## समर्पणम्

यथोः पुण्यात्मनोः पुण्यप्रतापेन शुभाशिषा ।
मयाप्तः सुधियां स्नेहस्तौ मातापितरौ स्तुवे ॥
साहित्यं शब्दशास्त्रञ्च यस्मादवगतं मया ।
तमहं सादरं नौमि भ्रातरं भुवनेश्वरम् ॥

कृपापात्रं वनेश्वरः

# प्रास्ताविकम्

काव्यरचनाया विविधासु विधासु नाटकमेका महत्वपूर्णा विधा । रमणीयताया दृष्ट्या तु नाटकं काव्यम् (श्रव्यम्) अतिशय्य वर्त्तते । अतिप्राचीनकालतः प्रचलितेयमुक्तिरप्यमूमेवार्थं पुष्णाति — "काव्येषु नाटकं रम्यम्" इति । 'अवस्थानुकृतिर्नाट्यम्'[1] इति परिभाषितमर्थमादधानं नाटकं (श्रव्य) काव्यापेक्षया जनजीवनेन सह समधिकं सम्पृक्तमास्ते । देश-काल-परिस्थितीनामनुसारं जनमनोरञ्जनं नाटकस्य परमं प्रयोजनम् । नाटकं विद्वत्समाजस्य सामान्यजनसमाजस्य च कृते समरूपमेवोपयोगि विद्यते । संस्कृतनाटकेषु संस्कृत–प्राकृतेतिभाषाद्वयप्रयोगोऽपीदमेवोद्देश्यमभिद्योतयति । यां कामप्यवस्थामापन्नो जनो नाटकेन स्वकीयमनसो विश्रामं लभते । इदं नाटकीयं प्रयोजनमनुवदता आद्यनाट्याचार्येण भरतेन भणितम्—

'दुःखार्त्तानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम् ।
विश्रामजननं लोके नाट्यमेतद् भविष्यति[2] ।।"

भरतमनुसरता महाकविना कालिदासेनापि विभिन्नरुचीनां जनानां समाराधनम् (मनोरञ्जनम्) एव नाटकस्य प्रयोजनं प्रतिपादितम्- "नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्[3] ।" अनया दृष्ट्या नाटककारः काव्यकारस्यापेक्षया समाजं प्रत्यधिकमुत्तरदायित्वमनुभवति ।

विभिन्नरुचीनां जनानां समाराधनैकफले त्रैलोक्यस्यास्य सर्वस्य भावानुकीर्तने, नानाभावोपपन्ने, नानाऽवस्थान्तरात्मके, सर्वोपदेशजनने च नाट्येऽस्मिन् सर्वं ज्ञानम्, सर्वं शिल्पम्, सर्वा विद्याः, सर्वाः कलाः, सर्वं शास्त्रम् श्रुति-स्मृति-प्रतिपादितं सर्वं कर्म समन्वितं वर्त्तते । यथाह भरतः—

---

१ दशरूपकम्, १/७
२. नाट्यशास्त्रम्, १/११४
३. मालविकाग्निमित्रम्, १/४

"न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न स योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते[1] ।।"

नाट्यं हि—"धर्म्यमर्थ्यं यशस्यञ्च सोपदेशं ससंग्रहम् । भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् ।। सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शकम्" भवति । तद्धि वेदोपवेदैः सम्पन्नः पञ्चमोवेदः[2] (नाट्यवेदः) ।

अत एव नाटकं कवित्वस्य चरमोत्कर्षो मन्यते — 'नाटकान्तं कवित्वम्' इति ।

नाटककारः काव्य (श्रव्य) कारापेक्षया समाजं प्रति समधिकनिष्ठावान् भवति । अतएव पौराणिकम् ऐतिहासिकं वा ख्यातवृत्तमाश्रित्य लिखितेषु संस्कृतनाटकेषु सर्वजनमनः समाराधनं सर्वजनोपयोगिता च महत्वपूर्णां भूमिकामाधत्तः । प्राचीनशैलीं तथा पौराणिकं विषयमावृत्य लिखितेषु प्राचीननाटकेष्वपि समसामयिकैः संविधानैर्विचारैश्च नवीनतामाधातुं श्लाघनीयः प्रयासः कृतोविद्यते । 'पुराणमित्येव न साधु सर्वम्'[3] इति क्रान्तिकारि वचो निगदतः कालिदासस्यापि पौराणिकाख्यानानां नवेषु प्रतिमानेषु रूपान्तरीकरणमभिमतं प्रतिभाति ।

वर्त्तमानयुगे जनरुचेर्महत् परिवर्त्तनं सञ्जातमस्ति । सम्प्रति जनानां हृदि पौराणिकी आस्था शिथिला सञ्जाता । मानवस्य युगानुरूपः कश्चन नवीनो विकासः सञ्जातोऽस्ति । अस्मिन् भौतिके युगे समस्यानामनेकासामभ्युदयात् काव्यनाटकेषु समसामयिकसमस्यानां तासां समाधानानाञ्च निर्देश आवश्यकः । आधुनिकाः साहित्यकाराः साम्प्रतिकीं युगानुरूपां प्रवृत्तिं पुरस्कृत्य काव्यनाट्यादीनां निर्माणे सम्प्रवृत्ताः सन्तीति सन्तोषस्य विषयः ।

अस्माकं प्राक्तनानि काव्यनाटकानि यद्यपि पौराणिकानि, रामायण महाभारतप्रसिद्धानि, लोकख्यातानि वा इतिवृत्तान्यादाय निर्मितानि सन्ति तथापि तेषु नवीनविचारोन्मेषो दृश्यते ।

---

१. ना० शा०, १/१०६ २. ,, ,, १/८-१८
३. मालवि० १/२

अधुना वैज्ञानिकाविष्काराणां विशेषतश्चलचित्राकाशवाणीदूरदर्श-नादीनां प्रभावात् परिवर्तितां जनमनोवृत्तिमभिलक्ष्य तस्यास्तोषाय नवीनं धरातलमाधृत्य नवां समस्यां समाश्रित्य च निर्मितेषु काव्यनाटकेषु युगानुगा प्रवृत्तिः परिलक्ष्यते, राष्ट्रियभावनायाः स्वरश्च मुखरो दृश्यते।

काव्यतो (श्रव्यकाव्यतः) नाटकमधिकरमणीयं प्रभावपूर्णञ्च भवति। अतो नाटकानां शिल्पविधाने, वस्तुविन्यासे, रसनिबन्धने, आकर्षणोत्पादने च सर्वत्र युगानुहारि नवीनत्वमपेक्षितम्।

साम्प्रतं रङ्गमञ्चसौविध्यं जनमनोवृत्तिञ्चापेक्ष्य संस्कृतेऽपि स्वल्पाङ्कानां स्वल्पसमयसापेक्षाणां नाटकानां निर्मितौ नाटककाराः प्रवृत्ता दृश्यन्ते। संस्कृते लघुनाटकानां रचना-प्रवृत्तिः पाश्चात्त्यैरे-काङ्किनाटकैरनुप्राणिताऽस्ति। यद्यपि रूपकेषु भाण व्यायोग-वीथी प्रहसनाङ्कादीनि, उपरूपकेषु रासक-गोष्ठी-श्रीगदित-प्रेंखणोल्ला-प्यादीनि च लघुनाटकानि (किञ्चित्परिवर्तनैस्तानि एकाङ्कान्यपि) सन्ति, तथापि तेष्वाधुनिकशिल्पसज्जादानामभावो विद्यते। आधुनिकानि संस्कृतलघुनाटकानि आकाशवाण्या दूरदर्शनेन च विशेषतः प्रभावितानि सन्ति। आकाशवाण्या दूरदर्शनस्य च विभिन्नकेन्द्रेभ्यः संस्कृतस्य रूपकाणि प्रतिमासं प्रसार्यन्ते। तयोरियं संस्कृत सेवा श्लाघ्याऽस्ति।

अधुना भारतीय समाजे वैवाहिकी समस्या, अस्पृश्यतायाः समस्या, जातिप्रथायाः समस्याचेति समस्यात्रयं मुखं व्यादायस्थितमिव जटिलं विद्यते। अस्माकं साम्प्रतिकाः साहित्यकाराः आसां साम्प्रतिकसमस्यानां समाधाने निरताः सन्ति। वैवाहिकीं समस्या-माश्रित्य मया 'रक्तदानम्' नाम एको नवीनः प्रयोगो विहितः। अस्मिन् प्रयोगे मया भारतीयसमाजे कुष्ठरोगस्येव प्रसृताया-स्तिलकयौतकादानप्रथाया दुःसाध्यसमस्यायाः समाधानस्य निर्देशो विहितः। अस्पृश्यतायाः प्रथामाश्रित्य मया विश्वकवे रवीन्द्रनाथठाकुरस्य चाण्डालिकायाः संस्कृतभाषया नाटकीयं रूपान्तरं कृतम्। यत्र तृषार्तो भगवतो बुद्धस्य प्रियशिष्यश्चा-ण्डालकन्याया हस्ततो जलं गृहीत्वा व्रतस्य पारणां करोति।

इदानीं 'विक्रान्तकर्णम्' भवतां समक्षं वर्तते। जातिप्रथामाश्रित्य लिखितेऽस्मिन् रूपके महाभारतीयसमाजस्य सर्वथा उपेक्षितं पात्रं कर्णो नायकत्वेन विराजते। स्वायत्तपौरुषः कर्णः स्वचरितस्योत्कर्षेण समाजे महत्वपूर्णां भूमिकामादधाति।

उच्चकुले उच्चजातौ वा समुत्पन्नः शक्तिरहितो गुणविरहितो जनः समाजे सुपूजितो न भवति। शक्तिसम्पन्नो जन एव पूज्य इति रूपकस्यास्य सन्देशः—जातिर्नैव हि पूज्यते सुमतिभिर्व्यक्तिः सदा पूज्यते।"

साम्प्रतिकसमस्योपेतः प्रयोगोऽयं मे समेषां सन्तोषाय सम्पत्स्यत इति मनो मे बज्रवद् विश्वस्तं नास्ति। प्रयोगस्य साफल्यं तु विदुषां परितोष एव। महाकविः कालिदासोऽपि स्वीकरोति—'आ परितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्'[1] इत्यादि। त्रुटयस्तु सम्भवन्त्येव। प्रयोगेऽप्यस्मिंस्ताः सम्भविष्यन्ति। अतोऽहं तासां सम्भावितानां त्रुटीनां कृते नाट्यरसिकान् सहृदयान् क्षमां याचे।

विक्रान्तकर्णमिदं रांचीस्थाकाशवाणीकेन्द्रतो महता साफल्येन प्रसारितमस्ति। एतदर्थमहमाकाशवाण्या रांची केन्द्रस्य सौजन्यस्याभारी वर्त्ते, तथा प्रयोगेऽस्मिन् भागं गृहीतवतां कलाकाराणां धन्यवादांश्च करोमि।

अन्तेऽहं येषां सत्प्रयासेन विक्रान्तकर्णमिदं समग्रसौंदर्येण प्रकाशं प्राप्तम् तेषाम् अमर प्रिंटर्स इति मुद्रणालयस्य व्यवस्थापकानां श्री लक्ष्मीकान्त झा महाभागानां साधुवादान् व्याहरामि।

१९९० ख्रीस्ताब्दिको मार्चमासः। | विदुषामाश्रवः वनेश्वर पाठकः

---

1. शाकुन्तलनाटकस्य प्रस्तावना।

नाटकस्य कथावस्तु —

सूतपुत्रो राधेयः कर्णः शस्त्रास्त्रविद्यायां नैपुण्यं प्राप्तुमाचार्यद्रोणस्य गुरुकुलं गच्छति। तत्राऽसौ शूद्रत्वात् प्रवेशंनलभते। ततः स, परशुरामस्याश्रमं प्रयाति। आश्रमे तस्मिन्नसौ स्वां जातिं निगूह्यात्मानं ब्राह्मणजातीयं प्रख्याप्य विद्याभ्यासं करोति। तस्य कष्टसहिष्णुतां वीक्ष्य तस्य जातौ सन्दिग्धचेताः परशुरामस्तस्य परीक्षणं करोति। कर्णः गुरोः सम्मुखमात्मनोऽपराधं स्वीकरोति। गुरुस्तस्मै शापं ददाति– प्राप्ते सङ्कटे मत्तः प्राप्ता सकला विद्या ते विस्मृता भविष्यति' इति।

इत्थं परशुरामादपि निष्फलमनोरथः स खिन्नमना गृहं प्रत्यावर्त्तते। द्रोणस्य गुरुकुले सम्पद्यमाने दीक्षान्तसमारोहेऽसौ सहसोपस्थाय राजकुमारैः सह प्रतियोगितापरीक्षायां सम्मिलितुमिच्छति। किन्तु तत्राऽप्यसौ जातिमाधृत्यानुमतिं न लभते। भूय एवमपमानितोऽपि कर्ण आत्मबलं न विजहाति। स वीरोचितदर्पेण सर्वान् भर्त्सयन् ब्रूते—

'सूतोऽहं सूतपुत्रोऽहं योवा स्योवाभवाम्यहम्।
दैवायत्तं कुले जन्म ममायत्तं तु पौरुषम्।
ततो दुःखितेन मनसा कर्णः दुर्योधनस्य समीपमेति।

दुर्योधनोऽवसरस्य लाभमेत्य शकुनेः प्रेरणया कर्णस्य सम्मानं करोति तथा तम् अङ्गदेशस्याधिपतिं विदधाति। एवमुपकृतः कर्णः दुर्योधनस्य प्राणव्ययेनापि साहाय्यं कर्तुं प्रतिजानीते।

महाभारतयुद्धमुपस्थितमस्ति। युद्धे महाबलस्य कर्णस्य साम्मुख्यं कर्तुं कोऽपि न क्षम इति सर्वे विजानन्ति। पाण्डुपुत्राणां हितैषिणश्चिन्तिताः सन्ति। देवराज इन्द्रश्छलेन तं कवचकुण्डले याचते। माता कुन्ती तमात्मनो ज्येष्ठपुत्रत्वेन स्वपक्षे कर्तुं प्रार्थयते। इन्द्रस्तु सफलमनोरथः स्वर्गं प्रत्यावर्त्तते, किन्तु कुन्ती निष्फलमनोरथैव निवर्त्तते। कर्णः केनापि पणेन दुर्योधनस्य विपक्षे स्थातुं न प्रतिशृणोति।

युद्धे सेनापतेः कर्णस्य रथचक्रं भूमिं प्रविशति। कर्णस्तन्निष्कासयितुं यतते। अस्मिन्नेवावसरे, कृष्णस्य प्रेरणया, अर्जुनः कर्णे बाणप्रहारंकरोति। तीक्ष्णशरहतः कर्णो भूमौ निपतति। कृष्णार्जुनौ तमुपसृत्य लज्जावनतौ तिष्ठतः। कृष्णः सत्येन मनसा स्वमपराधमङ्गीकृत्य तं क्षमां याचते। सूर्यपुत्रः कौन्तेयः कर्णः केवलमिदमेवोक्त्वा– कृष्ण! मम प्राणाः कण्ठगताः सन्ति। अहमधिकं वक्तुमसमर्थोऽस्मि। केवलमिदमेव मे कथनीयमस्ति यन्मया दुर्योधनस्य मित्रत्वं प्राणव्ययेन निर्व्यूढम्।

अहं गच्छामि। तव क्षमाया वार्तामहं भाविनः समाजस्योपरि विहाय गच्छामि।' प्राणान् विजहाति। कर्णस्य शरीरं निश्चेष्टं भूत्वा भूमौ निपतति।

कर्णस्यैवंविधेन वधेन भृशमनुतप्तहृदयः कृष्णोऽर्जुनं ब्रूते- 'अर्जुन! अद्य पृथिव्याः सर्वमहान् दानी, सर्वमहान् शीलवान् चरित्रवांश्च जनो भूतलादुत्थितः। अहमतिशयं दुःखमनुभवामि। कर्णस्य चरितमनुकरणीयमस्ति, तस्य तेजो नमस्यमस्ति, तस्य वीरता वन्दनीयाऽस्ति।

त्यागो दानं क्षमा शीलं सत्यं शौर्यं च निश्छलम्।
सर्वमेतद्धि कर्णस्यासमं श्लाघ्यं निदर्शनम्॥

॥ श्रीः ॥

# विक्रान्तकर्णम्

## ॥ प्रथमोऽङ्कः ॥

( नान्द्यन्ते सूत्रधारः प्रविशति )

सूत्रधारः—परात् परायै पूर्णायै सर्वदायै सुखात्मने ।
नमः सर्वार्थसाधिन्यै शक्त्येऽमितभूतये ॥१॥

लोके नैव हि पूज्यतेऽभिजननं गोत्रं यशो मण्डितम्,
जातिर्नैव कुलं न वित्तमधिकं नैवाकृतिर्भूषिता ।
शक्तेरेव हि पूजनं विदधति लोकाः सदा श्रद्धया,
तस्माद् व्यक्तिरपूर्वशक्तिसहिता पूज्या न जात्यादयः ॥२॥

अलमतिविस्तरेण । आज्ञापितोऽस्मि नाट्यपरिषदा यदद्य सम्पद्यमाने सारस्वतसमारोहे समुपस्थितानां मान्यानामतिथीनां समाराधनाय नवेन सविधानकेन नूतनेन कथावस्तुना चोपेतं किमप्यभिनवं नाटकं प्रयोक्तव्यमस्माभिरिति । तद् गृहिणीमाहूय पृच्छामि तदर्थमस्माकं कुशीलवाः प्रस्तुता न वेति । (नेपथ्याभिमुखीभूय) आर्ये ! गृहकार्यमवसितं चेदिहागम्यताम् ।

नटी—(प्रविश्य) आर्य ! इयमस्मि किं क्रियताम् ?

सूत्र.—आर्ये । अद्य सम्पद्यमानेऽस्मिन् सारस्वतसमारोहे दूरतोऽदूरतो वा समागत्य समुपस्थितानां रसभावविदां विदुषां काव्यामृतरसास्वादे चञ्चरीकायमाणमानसानां सहृदयरसिकानां समाराधनाय किमप्यभिवं नाटकं प्रयोक्तव्यमस्माभिरिति नाट्यपरिषद आदेशः, तदस्माकं कुशीलवास्तदर्थं प्रस्तुता न वेति वेदितुमिच्छामि ।

नटी—आर्य ! नाट्यप्रयोगे सर्वथा कुशला अस्माकं कुशीलवास्तदर्थं प्रस्तुताः सन्ति । किन्तु किमप्यभिनवं नाटकं प्रयोक्तव्यमित्यत्र मे वचनावकाशोऽस्ति ।

सूत्र—आर्ये ! तवाभिप्रायमहं वेद्मि। यद्यपि किमपि वस्तु सर्वथाऽभिनवं न भवति। तत्रापि प्राचीनत्वमाधारत्वेन सन्तिष्ठत एव। तथापि नवीनरूपेण तस्य प्रस्तुतीकरणमेव तत्र नवीनतामादधाति। जानास्येव यत् मिमपि वस्तु प्राचीनमत एव तत् श्रद्धापात्रम्, अथवा नवीनमतोऽश्रद्धेयमित्येकान्ततः कोऽपि पक्षः समाश्रयणीयो नास्ति। कालिदासोऽपि भाषते—"पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्" इति।

नटी—आर्य ! सत्यमेतत्। तत् किनानैतादृशं नाटकमार्येण प्रयोगार्थं विचिन्तितं यद् रङ्गस्य सर्वथाऽनुकूलं सामयिकसमस्योपेतं च स्यात्।

सूत्र.—आर्ये ! साम्प्रतं साम्प्रतिकसमस्योपेतानि नूतनवस्तूपहितानि नवसंविधानकानि काव्यनाटकादीनि निर्मातुं नितरां निरताः सन्ति साम्प्रतिकाः कविवराः। अधुनैवास्माकं लोकप्रियेण कविवरेण आचार्यडॉक्टरवनेश्वरपाठकेन निर्मितं भारतीयसमाजे कुष्ठरोग इव प्रसृतायाः तिलकयौतकादानप्रथायास्तथा राष्ट्रस्य समाजस्य चैक्यशक्तिं क्षीणतां प्रापयितुं प्रसृताया अस्पृश्यतायाः समस्यायाः समाधानोपायेनोपहितं 'रक्तदानम्' मातङ्गकन्या' चेतिनामकं नाटकद्वयमस्माभी रङ्गमञ्चे महता साफल्येन प्रयुक्तम्; राँचीस्थाकाशवाणीकेन्द्रेण प्रसारितञ्च तन्नाटकद्वयमिदानीं लोकप्रियताया महतीं भूमिमधिष्ठितमास्ते।

अहमिदानीं संस्कृतसेवायां समर्पितजीवनेन तेनैवाभिनवेन कविना विरचितेन 'विक्रान्तकर्णम्' इत्याख्येन नवेन नाटकेनोपस्थातुमिच्छामि।

नटी—आर्य ! भारतीयसमाजस्योच्चवर्गेणोपेक्षितः स एव महाभारतीयः कर्णो यस्यानुपमशक्तेरभिनन्दनीयचरितस्य गाथया महाभारतस्य पृष्ठानि रञ्जितानि सन्ति; अस्य विक्रान्तकर्णस्य नायकः किम् ?

सूत्र—आम्, स एव दीनानां परिपालकः, सत्यवाक्, अमितविक्रम-विभूषितः, महादानी सूर्यपुत्रः कर्णः नाटकस्यास्य नायकत्वेन विषयीकृतः। तदेहि, अनन्तरकरणीयं सम्पादयावः। (विलोक्य) आर्ये! पश्य, अस्माकं प्रमुखः कुशीलवः कर्णस्य भूमिकामापन्नो गुरुकुलं प्रस्थितः, तद् द्रुतमपसरावः। (उभौ निष्क्रान्तौ)

प्रस्तावना

॥ जवनिकापातः ॥

—:०:—

(प्रथमं दृश्यम्)

स्थानम्-गुरुकुलपथः

(ततः प्रविशति ब्रह्मचारिवेषधारी शरचापहस्तः कर्णः)

कर्णः—(सखेदः परिक्रामन्) अहो नियतेर्विडम्बना! कोनामैतज्जानाति यत् पाण्डवानां तादृशे समुन्नतकुले जातः सूर्यपुत्रः कौन्तेयोऽहं सूतपुत्रो राधेयो भूत्वा समाजे विगर्हित-जीवनं जीवामि। युधिष्ठिरादयः पाण्डवाः दुर्योधनादयः कौरवाः गुरुकुले ससम्मानमधीयते; किन्तु युधिष्ठिराग्रजस्य कर्णस्य तादृशं सौभाग्यं क्व? माता कुन्ती राजमहिषी, राजमाता, महादेवी च भूत्वा राजकुले निष्कलङ्कं जीवनं यापयति; किन्तु तस्याः पुत्र एष कर्णः सूतपत्न्या राधायाः गृहे जीवति। अहं सूतपुत्रोऽस्मीति हेतोः समाजे मे सम्मान्यं स्थानं नास्ति। धन्योऽयं समाजः, धन्येयं भारतानां भूमिर्भारतम्!

लोके ये धनशालिनो द्विजकुले जाता महान्तस्तु ते,
मान्यास्ते निखिलेऽपि कर्मणि शुभे स्थानं लभन्तेऽश्रमम्।
किन्तूच्चेऽभिजने जनो न जननं प्राप्नोति दैवाद् यदि
विद्याबुद्धिबलान्वितोऽपि लभते मानं समाजे न सः ॥३॥

अस्तु, गुरुकुलं गत्वा पश्यामि, तत्र राजकुमाराणां मध्ये मेऽध्ययनमनुमतं भवति न वेति। (प्रस्थितः)

॥ जवनिकापातः ॥

—:०:—

(द्वितीयं दृश्यम्)

स्थानम्–गुरुकुलम्, कुलपतेराचार्यद्रोणस्य कार्यालयः कुलपतिः, उपकुलपतिः कृपाचार्यः, प्रवेशप्रभारी कृतवर्मा च यथा–स्थानमुपविष्टाः सन्ति ।

छात्रः— (प्रविश्य प्रणम्य च) आचार्यपादाः । कश्चन प्रवेशार्थी द्वारि तिष्ठति । तद् यथाऽऽदिशन्ति गुरुचरणाः ।

द्रोण;— प्रवेशय तम् ।

छात्रः— यदाज्ञापयन्ति गुरवः । (निष्क्रम्य कर्णेन सह प्रविश्य च) ब्रह्मचारिन् । इमे गुरुवर्याः ।

(कर्णः सविनयं सर्वानभिवादयते)

द्रोण :— ब्रह्मचारिन् । किंनामधेयोऽसि ? तव पिता कः ? कस्मिन् कुले त्वं समुत्पन्नः ?

कर्ण :— आचार्य ! नाम्नाऽहं कर्णोऽस्मि । पितुः कुलस्य च नामाहं न वेद्मि । जना मां सूतपुत्रं राधेयं कथयन्ति ।

द्रोणः — कर्ण! त्वं राधेयोऽसि, सूतपत्न्या राधायाः पुत्रोऽसि. सूतपुत्रस्त्व जात्या शूद्रोऽसि । शूद्राणां गुरुकुलेऽस्मिन् प्रवेशो निषिद्धः । स्त्रीशूद्रौ नाधीयाताम्, इत्यस्माकं सिद्धान्तवचनम् । (कृतवर्माणं प्रति) आचार्य कृतवर्मन् । अत्रभवतः किमभिमतम् ?

कृतः— सुष्ठु भणन्त्याचार्यवर्याः । गुरुकुलेऽस्मिन् शूद्राः प्रवेशं नार्हन्ति । तद् गच्छ कर्ण । तवाध्ययनं प्रतिषिद्धम् ।

कर्णः— आचार्य ! मया मातुः समीपे धनुर्विद्यायाः सामान्यंज्ञानं लब्धम् । अहं धनुष उत्तोलनम्, धनुषः स्फालनम्, प्रत्यञ्चाया आरोपणमाकर्षणञ्च, प्रत्यञ्चायाः टङ्कारम्, शरसन्धानम्, लक्ष्यवेधादिकञ्च सिद्धान्ततः सम्यगवच्छामि । केवलमेतेषां प्रायोगिकं विशेषज्ञानमवगन्तुमिहागतो

ऽस्मि। तदत्र राजकुमाराणां मध्ये ममाप्यध्ययनमनुमन्यतामाचार्यपादैः। यद्यपि धनुर्विद्यायाःसैद्धान्तिकं ज्ञानं मे वर्त्तते; किन्तु प्रयोगं विना तज्ज्ञानमकिञ्चित्करम्। यतो हि—

सैद्धान्तिकी तु या विद्या नोपयोगाय सा भवेत्।
लतेव सुभगा सा तु अपुष्पफलिनी स्थिता ॥४॥

द्रोणः— कर्ण! त्वं सूतपुत्रोऽसि। सूतपुत्रस्य तवात्र प्रवेशः कदाप्यनुमतो न भविष्यति। मनुना अध्याप्यानां या दश अर्हताः प्रतिपादिताः—

आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्मतः ॥५॥

इति। तास्वन्यतमापि त्वयि नास्ति। तदितो गच्छ।

कर्णः— आचार्य! किं सूतकुले जन्म ममापराधो यन्मेऽध्ययनं नानुमन्यतेऽत्रभवता। भूतलमिदमनेकेषु भागेषु विभक्तमस्ति। कश्चन भूभागः समः कश्चन विषमः। कश्चिदुन्नतः, कश्चिद् गर्तः। उच्चावचेऽस्मिन् भूमिभागे आकाशात् पतित तोयमुच्चे गर्ते वा पतति। किमेष तोयस्यापराधो यदेतद् गर्ते निपतति। आचार्य! अध्ययने जातिः कुलं वा न विचार्यताम्, अध्ययनार्थिनः पात्रता क्षमता वा विचारपथमानीयताम्। पूजाया मापदण्डो गुणाः सन्ति, न तु जातिः। गुणकर्मयुता व्यक्तिरेव समाजस्य निर्मात्री, न तु गुणकर्मविहीना जातिः!

न कश्चिज्जन्मना विप्रो जायते क्षत्रियोऽथवा।
सर्वोऽपि जातः शूद्रः सन् द्विजत्व याति कर्मणा ॥६॥

किं ब्राह्मणकुले नृपकुले वा शूद्रा न जायन्ते, शूद्रकुले वा ब्राह्मणा न जायन्ते? अहं शूद्रो नास्मि। मदीया योग्यता परीक्ष्यताम्। अहं कथमप्येषां राजपुत्राणां पश्चाद्वर्त्ती न भविष्यामि।

तेजस्वी न हि वाञ्छति स्वमहिमानं गोत्रजात्यादिभिः,
प्राप्नोति स्वबलेन लोकनिचये लोकातिगां विश्रुतिम् ।
जात्या गोत्रकुलादिभिर्विरहितोऽप्यच्चर्यो जनः शक्तिमान्,
व्यक्तिर्नैव हि पूज्यते सुमतिभिः शक्तिः सदा पूज्यते ॥७॥

द्रोणः— एतदसम्भवम् । योग्यतापरीक्षायामपि तवाधिकारो नास्ति ।

कर्णः— गच्छामि आचार्य ! गच्छामि । एतदवधार्यताम्, समय आगच्छति यदा शक्तेरेव पूजां लोको विधास्यति, न तु शक्तिविहीनां व्यक्तिं जातिं वा पूजयिष्यति । तदा केवलं जातेर्घण्टानिनादिनो जनाः समाजे पश्चाद्वर्त्तिष्यन्ते, मादृशाः शूद्रा एव समाजस्य नेतारो भविष्यन्ति । तदभिरक्षन्तु भवन्तो निजं गुरुकुलम्, गच्छत्येष स्वायत्तपौरुषः सूतपुत्रः कर्णः ।
(सक्रोधं सर्वानवलोक्य निर्गच्छन्)

'सूतोऽहं सूतपुत्रोऽहं यो वा स्यो वा भवाम्यम् ।
दैवायत्तं कुले जन्म ममायत्तं तु पौरुषम् ॥८॥

( जवनिकापातः )

॥ इति प्रथमोऽङ्कः ॥

—:०:—

॥ अथ द्वितीयोऽङ्कः ॥

(प्रथमं दृश्यम्)

(स्थानम्—परशुरामस्य शस्त्रप्रयोगशाला, धनुष्परशुभल्लादय आयुधा यथास्थानं रक्षिताः सन्ति, परशुरामो ब्राह्मणपुत्रान् शस्त्रप्रयोगं प्रशिक्षयति ।)

कर्णः— (प्रविश्य) एष महातेजस्वी, शस्त्रे शास्त्रे च सुप्रतिष्ठः परशुधरः केवलं ब्राह्मणपुत्रान् शस्त्रसञ्चालनं प्रशिक्षयति । तदहमेनमुपगम्यात्मनो जातिं निगूह्य एतस्मात् शस्त्रप्रयोगनैपुण्यमधिगच्छामि । (उपगम्य बद्धाञ्जलिः सन्) द्विजन्मा कर्णोऽहं भवन्तमभिवादये ।

परशु.—चिरञ्जीव वत्स ! ब्रूहि, किमभिलषंस्त्वं मामुपागतः ?

कर्णः—आचार्य ! धनुर्विद्यायाः सामान्यज्ञानेन सम्पन्नोऽहं भवत्तस्तत्र नैपुण्यं प्राप्तुमिच्छामि ।

परशु.—ब्राह्मणवटो ! त्वं योग्योऽसि । त्वमत्र कञ्चित् कालं सुखेन स्थित्वा शस्त्रप्रयोगनैपुण्यं प्राप्नुहि । उपविश ।

( कर्णः छात्राणां मध्ये उपविशति )

परशु.—वटवः ! इदानीं सन्ध्याकालः समुपस्थितः । अतीव-शीतलेयं वेला । अध्ययनसमयोऽप्यवसानं गतः । श्वः प्रातः सन्ध्यावन्दनादिकं समाप्यात्र प्रयोगशालायां समुपस्थितान् युष्मानहं सव्यसाचित्वम् (अर्थात् वामकरेण शरसञ्चालनम्) शिक्षयिष्यामि । तत् सायन्तनं सन्ध्याविधिं सम्पादयितुमाश्रमं प्रविशामः । इदानीं कुलगानम् । (सर्वे उत्थाय समेत्य च) ।

हे विश्वम्भर विश्वविभूषण विश्वेश्वर हे विश्वविभो ।
हे करुणामय हे ज्योतिर्मय प्रभापुञ्ज हे विश्ववसो ! हे विश्व. ।।

धियं देहि मे ह्रियं देहि मे श्रियं देहि मे देहि मतिम् ।
रतिं देहि मे तव चरणेषु देहि विभो ! मे शुभां गतिम् ।। हे विश्व.।।

जगन्मणे ! हे व्योमविहारिन् वियद्धंस हे विभाकर ।
हर हृदयस्थं तमो मदीयं …कुरु प्रकाशं पाहि प्रभो ।
हे विश्वम्भर विश्वविभूषण विश्वेश्वर हे विश्वविभो ।।१।।

"ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै" ।।२।।

ॐ शान्तिः, शान्तिः, शान्तिः, ।

(छात्रा आचार्यमनुगच्छन्त आश्रमं प्रविशन्ति)

(जवनिकापातः)

—:o:—

( द्वितीयं दृश्यम् )

स्थानम्–आश्रमस्यैकान्तप्रदेशः, एकः स्थूलकायः छात्रः पाठाभ्यासं करोति ।

छात्रः—(पुरः स्थापितं पुस्तकं प्रणमन्)

"गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः ॥३॥

गुरुः शिष्यस्य मनसि स्थितमज्ञानजं तमः ।
ज्ञानजेन प्रकाशेन दूरयत्यनुकम्पया ॥४॥

अपरः छात्रः—( प्रविश्य ) देवदत्त ! किमिदमेकान्ते गुरुपूजने व्यापृतोऽसि ?

छात्रः—( तमपश्यन् तथैव )

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुर्निमीलितं येन तस्मै श्रीगुरवे नमः ॥५॥

अपरः—देवदत्त ! गुरुमन्त्रस्त्वयाऽशुद्धः पठितः । चक्षुर्निमीलितम् इत्यस्य स्थाने 'चक्षुरुन्मीलितम्' इति भवति ।

देव.— अरे यज्ञदत्त ! त्वं शस्त्रस्य छात्रोऽसि, अहमस्मि शास्त्रस्य विद्यार्थी, व्याकरणपण्डितोऽस्मि । आगच्छ मया सह शास्त्रार्थं कुरु । ब्रूहि निमीलनोन्मीलनयोः कः सैद्धान्तिको भेदः ? उपसर्गास्तु निरर्थकाः, असमीचीनार्थकाश्च भवन्ति, यथा—

'निवासः' इत्यत्र 'निः' 'उद्वासः' इत्यत्र 'उद्' ।

यज्ञ.— सैद्धान्तिको भेदो भवतु वा न भवतु । किन्तु प्रायोगिको भेदस्तु वर्त्तत एव ।

देव.— कथमिव ?

यज्ञ.— एवम् । (तस्य चक्षुषी निमील्य) इदं निमीलनं भवति । ( पुनः तस्य चक्षुषी उन्मील्य ) इदमुन्मीलनं भवति । ज्ञातम् ?

देव.— ज्ञातम् । क्षणं तिष्ठ, यावदहमभ्यासं करोमि । (तथा कृत्वा) इदं निमीलनं भवति, इदमुन्मीलनं भवति । (भूयशस्तथैव कृत्वा) आम्, इदानीमभ्यस्तम् । त्वं प्रायोगिकज्ञाने वस्तुतः पण्डितोऽसि अहं केवलं सिद्धान्तमेव जानामि ।

यज्ञ.— अत एव त्वं मूर्खोऽसि ।

देव.— त्वयाऽपि तदेव विशेषणं प्रयुक्तम् यन्मे पत्नी मदर्थं प्रयुङ्क्ते । त्वं मां मूर्खं कथयसि, मम पत्नी अपि मां मूर्खं कथयति, गुरवोऽपि यदा कदा मदर्थं तदेव विशेषणं व्यवहरन्ति ।

यज्ञ.—तव पत्नी त्वां मूर्खं कथं कथयति ।

देव.—सा कथयति यत्— त्वं विवाहात् परं पठसि, गृहं परित्यज्य गुरुकुले तिष्ठसि । अत एव मूर्खोऽसि' ।

यज्ञ.—सा सत्यं वदति । किं विवाहात् परमपि कोऽपि पठति ?

देव.—भवतु, त्वं तावद् ब्रूहि, त्वं मां मूर्खं कथमभिधत्से ।

यज्ञ.—त्वं स्थूलकायोऽसि । स्थूलस्य पुंसो बुद्धिरपि स्थूलतां व्रजति ।

देव.—आचार्यो मां मूर्खं कथमभिभाषसे । अहं तु प्रतिदिन पठामि, परिश्रमं करोमि, तथापि स मां मूर्खमेव भाषते । कथमिदम् ?

यज्ञ.—अरे मूर्ख ।

देव.—पुनस्तदेव चिरपरिचितं विशेषणम् ?

यज्ञ.— शृणु तावत् ।

देव.—शृणोमि, कथय ।

यज्ञ.—पठनेन परिश्रमेण वा किमपि न सिध्यति ।

देव.—तत् कथं सिध्यति ?

यज्ञ.—गुरुकृपात एवं सर्वं सिध्यति ।

देव.—सा कृपा त्वस्माकं सुलभा न । तत् तु कर्णस्यैव सौभाग्यम् । अत एव स शस्त्रे शास्त्रे च सर्वानस्मानुपहसति । गुरुकृपातः प्रतियोगितापरीक्षायामपि स सर्वानस्मानतिक्रम्य वर्त्तिष्यते ।

गुरोः कृपातः साफल्यं लभते मन्दधीरपि ।
तां विना न हि साफल्यं प्राप्नोति तीव्रधीरपि ॥६॥

यज्ञ.—तन्न भविष्यति ।

देव.—कथं न भविष्यति ?

यज्ञ.—ब्रह्मदत्तेन कर्णस्य सम्बन्धे रहस्यमेकमुद्घाटितमस्ति ।

देव.—ब्रह्मदत्तोऽपीदानीमुद्घाटनं करोति ? अहं तु जानामि महापुरुषा नेतारश्चैव केवलमुद्घाटनं कुर्वन्ति ।

यज्ञ.—त्वं वस्तुतः मूर्खोऽसि ।

देव.—यज्ञदत्त । तव मूर्खेतिकथनस्याभ्यासोऽस्ति चेद् यथेच्छं-कथय । किन्तु स्पष्टं वद, ब्रह्मदत्तेन किं कथितम् !

यज्ञ.—स कथयति–'कर्णः ब्राह्मणकुमारो न, क्षत्रियकुमारोऽस्ति' ।

देव.—ऐं ! कर्णः ब्राह्मणो नास्ति, क्षत्रियोऽस्ति ?

यज्ञ.—अथ किम् । तस्याकृतिरेव सूचयति यदसौ क्षत्रियकुमारोऽस्ति ।

देव.—नहि, एतद् विश्वसनीयं नास्ति । ब्रह्मदत्तो मिथ्या वदति । अहं तेन सह शास्त्रार्थं करिष्यामि । अहं व्याकरण-पण्डितोऽस्मि । आह्वय तम् ।

यज्ञ.—अरे मूर्ख ! त्वं ब्रह्मदत्तेन सह शास्त्रार्थं करिष्यसि ? तव श्वशुरस्य श्वशुरोऽपि तेन समं शास्त्रार्थं कर्तुं नार्हति ।

देव.—(सरोषम्) ! त्वं मे श्वशुरस्य श्वशुरमुपहससि । अहं सर्वं सहिष्ये, किन्त्वात्मनः श्वशुरस्य श्वशुरस्योपहासं कथमपि न सहिष्ये । मम श्वशुरस्य श्वशुरेण, श्वशुरस्य श्वशुरेण········ (परशुराममागच्छन्तमवलोक्य विरमति, आगतं तमुभौ प्रणमतः) ।

परशु.—देवदत्त ! कथं त्वमतिक्रुद्धोऽसि ?

देव.—आचार्य ! एष यज्ञदत्तो मे श्वशुरमेव न, तस्यापि श्वशुरमुपहसति । (उभौ हसतः)

परशु.—न हि, तव श्वशुरस्य श्वशुर उपहसनीयो नास्ति । स तु महान् वैयाकरणोऽस्ति ।

देव.—आचार्य ! एवमेव, स महावैयाकरणोऽस्ति । तस्यैव संस्कारो मयि वर्त्तते । (पुनरुभौ हसतः)

परशु.—अथ किम् । निःसन्दिग्धं त्वयि श्वशुरपरम्परया: पाण्डित्यं विद्यते । अस्तु, युवयोर्विवादस्य कारणं किम् ?

यज्ञ.—आचार्य ! ब्रह्मदत्तेन कर्णस्य सम्बन्धे रहस्यमेकमुद्घाटितम् ।

परशु.—किं तत् ?

यज्ञ.—ब्रह्मदत्तः कथयति–'कर्णः ब्राह्मणकुमारो नास्ति, क्षत्रियकुमारोऽस्ति ।

परशु.—सत्यं कथयति सः । कर्णस्य कठोराकृतिम्, कष्टसहिष्णुताम्, भोजनादिकमुपेक्ष्यानवरतं क्रियमाणं श्रमञ्च विलोक्य ममापि मनसि सन्देहो जायते । अनुकम्पामृदुचित्तः कोमलवपुर्ब्राह्मण एतावान् कष्टसहिष्णुर्न भवति । तदहं तस्य परीक्षणं करिष्यामि । युवां गच्छतम्, अभ्यासे मनोयोगेन वर्त्तेयाथाम् ।

उभौ–यदादिशन्ति गुरवः । (सर्वे निर्गच्छन्ति)

( जवनिकापातः )

—:o:—

(तृतीयं दृश्यम्)

स्थानम्–आश्रमाद् बहिर्भूभागः । परशुराम आतपे कर्णस्य जंघायां शिरोनिधाय निपतितस्तं सम्भाषते ।

परशु.—वत्स ! त्वया धनुर्विद्याप्रयोगनैपुण्यमधिगतम् ! आश्रमस्य सर्वे एव छात्रा धनुर्विद्यायां पारङ्गताः सञ्जाताः । श्वो दीक्षान्तसमारोहो भविष्यति । समारोहे यूयं सर्वेऽनुशासनीयाः स्थ । ( एवमाभाषमाण आचार्यः सुप्यति । आचार्यस्य शिरसः कीटो निःसृत्य कर्णस्य जङ्घाभ्यन्तरं प्रविश्य बहिर्निर्गच्छति । जंघातो रुधिरधारा प्रवहति । रुधिरक्लिन्नमस्तकः परशुरामः सहसोत्थाय सक्रोधं पृच्छति–) कर्ण ! सत्यं वद, त्वं जात्या ब्राह्मणोऽसि क्षत्रियो वा ? सत्यं ब्रूहि, न किमपि निगूहनीयम् ।

कर्णः—(बद्धाञ्जलिः सन्) आचार्य ! सत्यं वदामि, नाहं ब्राह्मणः। अहं पाण्डवानामग्रजोऽस्मि, माता मे कुन्ती पिता मे सूर्यः। किन्तु वृत्तमेतत् सर्वैर्नाविगतम्। अहं भगवतः सूर्यात् सर्वं विदितवानस्मि। एतद् रहस्यं केवलं मे जन्मदात्री कुन्ती वेत्ति, जन्मदाता सूर्यो वेत्ति, तथा सूतपत्न्या राधया निजौरस इव परिपालित एष गर्हितजन्मा राधेयः कर्णो वेत्ति। आचार्य ! सत्यस्यापह्नवनेन कृतापराध एष भवच्छिष्यः कर्णः कृपया क्षम्यताम्।

(पादयोः पतति)

परशु.—कर्ण ! त्वं गुरौ सापराधोऽसि। त्वया जानता सत्यस्यापह्नवः कृतः। गुरौ कृत एषोऽपराधोऽक्षम्योऽस्ति।

गुरुः शिष्यस्य सत्येन कर्णावावृणुते उभौ।
तं न मिथ्याभिभाषेत तस्मै द्रुह्येन्न जातुचित्॥७॥

अपराधो जघन्योऽस्ति गुरौ मिथ्याऽभिभाषणम्।
गुरुं नैवानृतं ब्रूयात् प्राप्तेऽपि प्राणसङ्कटे॥८॥

अतोऽपराद्धे त्वयि नितरां क्रुद्धोऽहं ते शापं प्रददामि यदुपस्थिते सङ्कटे मत्तोऽधिगता सर्वा विद्या ते विस्मृतिं यास्यति। एष त्वमभिशप्तोऽसि। (इत्युक्त्वा कमण्डलोर्जलं हस्ते निधाय तद् भूमौ क्षिपति)

कर्णः—(पादयोः पतित्वा) आचार्य ! क्षम्यताम्। एव प्रथमोऽपराधो मे क्षम्यताम्। शापः परावर्त्त्यताम्। एतावद्दिनपर्यन्तं कृतः परिश्रमो मे व्यर्थतां न नीयताम्। कृपया क्षम्यताम्। (पादयोः पतति)

परशु.—(पादावपसार्य) कर्ण ! मे वचनं मिथ्या न भविष्यति। त्वमपराद्धोऽसि मिथ्यावदिनस्तेऽत्र स्थितिरसम्भवा। तद् बहिर्गच्छ। आश्रमे ते प्रवेशो निषिद्धः (कर्ण उत्थाय गुरुमुखं पश्यति)

परशु.—किं पश्यसि ? गच्छ, द्रुतं गच्छ। (कर्णोऽवनतशिरा बहिर्निर्गच्छति, परशुराम आश्रमाभ्यन्तरं प्रविशति)

यज्ञदत्तः—(पथि गच्छन्तं कर्णमुपेत्य) भ्रातः कर्ण ! विषण्णवदनोऽवनतशिरास्त्वमिदानीं कुत्र गच्छसि ?

कर्णः—अहमाश्रमान्निःसारितोऽस्मि ।

यज्ञ —केनापराधेन ?

कर्णः—अहं क्षत्रियोऽस्मि । ब्राह्मणेतरेषामाश्रमेऽस्मिन् प्रवेशो निषिद्धः ।

यज्ञ.—किं त्वं ब्राह्मणो न भवसि ? त्वया गुरुं प्रति मिथ्या भाषितम् ।

कर्णः – आम् । मयाऽत्र शिक्षामधिगन्तुं जातेरपह्नवः कृतः ।

यज्ञ. त्वया महानपराधः कृतः । तदनुभूयतां गुरोः शापदण्डः ।

कर्णः – यज्ञदत्त ! त्वं मामुपहसितुमिहागतोऽसि तत् स्मर्यताम्, शिक्षायां ब्राह्मणानामेकाधिकारो न वर्त्तिष्यते शिक्षायां समेषां समानोऽधिकारोऽस्ति । अत्र जातिविशेषस्य, वर्गविशेषस्य वा एकाधिकारः समाजहिताय राष्ट्रकल्याणाय च न कल्पिष्ते । 'स्त्रीशूद्रौ नाधीयाताम्' इति राष्ट्रद्रोहि समाजविरोधि वचः, तन्न श्रद्धेयम् । तद् रक्षन्तु भवन्तो ब्राह्मणा आश्रममिमम् । गच्छत्येष स्वायत्तपौरुषः कर्णः ।

(सक्रोधस्तमवलोकयन् निर्गच्छति)

(जवनिकापातः)

॥ इति द्वितीयोऽङ्कः ॥

—:०:—

॥ अथ तृतीयोऽङ्कः ॥

(प्रथमं दृश्यम्)

स्थानम् – आचार्यद्रोणस्य गुरुकुलम् । दीक्षान्तसमारोहे भीष्मपितामहः, महाराजो धृतराष्ट्रः, महामन्त्री संजयः, द्रोणाचार्यः, कृपाचार्यः, कृतवर्मा, राजकुमाराः कौरवाः पाण्डवाश्च यथास्थानमुपविष्टाः सन्ति ।

कृपाचार्यः—(उत्थाय) महामान्याः सभासदः, परमादर्शा आचार्यवर्याश्च ! इमे राजकुमाराः शस्त्रास्त्रविद्यायां सुपरीक्षिताः सन्ति । धनुर्युद्धे, गदायुद्धे, मल्लयुद्धे, भल्लयुद्धे, खड्गयुद्धे, तथाऽपरेषु युद्धेषु च प्राप्तनैपुण्या इमे दीक्षान्तसमारोहेऽस्मिन्नुपदेशनीयाः सन्ति । तदर्थमेतानहमिदानीमाचार्यस्य सम्मुखमुपस्थापयामि । (उपविशति)

द्रोणाचार्यः—(उत्थाय) अहमस्य गुरुकुलस्य कुलपतेः पवित्रमुत्तरदायित्वं निर्वहन्निदानीमात्मनः प्रियशिष्यान् किञ्चिदुपदेष्टुमिच्छामि । तद् युष्माभिः सावधानैः श्रोतव्यमवधार्यञ्च । युष्माभिरस्मिन् गुरुकुले जीवनस्य प्रथमाश्रमे ब्रह्मचर्ये निवसद्भिर्युद्धविद्यायाः सम्यगध्ययनं कृतम्, तत्र नैपुण्यञ्चाधिगतं युष्माभिः । तद् युष्माभिरितो निर्गत्यापरमाश्रमं गार्हस्थ्यं प्रविश्य प्राप्ताया विद्याया बहुजनहिताय बहुजनसुखाय चोपयोगः कर्त्तव्यः । मानवतायाः सेवैव मानवस्य महान् धर्मोऽस्ति । यूयं विदितवेदितव्याः स्थ । युष्माकं किमप्युपदेष्टव्यमवशिष्टं नास्ति । तथाप्यहं, वच्मि-यूयं स्वजीवने सदैव सत्यं वदत, धर्मं चरत ........

कर्णः—(सहसा प्रविश्य) आचार्य ! विरमतु भवानस्मान्मिथ्योपदेशनात् । सत्यस्य धर्मस्य चापलापः सत्यभाषणं धर्माचरणमस्ति चेदस्योपदेशस्य कोप्युपयोगो नास्ति ।

राजकुमाराः—(उत्तेजिता भूत्वा) मारयत इममुन्मत्तम्, असम्बद्धभाषिणम्, कुलपतेराचार्यस्येहावमानिनम् ।

भीष्मः—शान्ता भवत, मैनमन्तरा प्रतिबध्नीत । वदत्वेष यद् वदति ।

कर्णः—आचार्य ! किमेकलव्यस्य दक्षिणकराङ्गुष्ठस्याच्छेदनं सत्यमस्ति ? जातेराधारमाश्रित्य प्रतिभाशालिनश्छात्रस्य गुरुकुले प्रवेशनिषेधः किं गुरुकुलस्य, शिक्षालयस्य, आचार्यस्य वा धर्मोऽस्ति ? उपदिशतु भवान् किमिदं सत्यम्, किमेष धर्मः ?

(सभासदस्तूष्णीकास्तिष्ठन्ति)

भीष्मः—(कर्णं प्रति) वीर ! वयं तव परिचयं ज्ञातुमिच्छामः । ब्रूहि, त्वन्नाम किम्, किं ते कुलम्, तव जातिश्च का ?

कर्णः—वीरस्य किमपि कुलम्, काऽपि जातिर्वा न भवति । वीरः स्वयमेवात्मपरिचयो भवति । तद् भवतां राजकुमाराणां मध्ये कश्चन मया सह धनुर्विद्यायाः प्रतियोगितायां स्थातुमिच्छति चेत् स प्रतियोगित्वेन मम सम्मुखं तिष्ठतु; पश्याम्यहं राजकुलोत्पन्नानामाचार्यद्रोणस्य शिष्याणां वीरत्वम् ।

द्रोणः—(अर्जुनं प्रति) वत्स अर्जुन ! त्वमस्याह्वानमङ्गीकुरु ।

अर्जुनः—(उत्थाय) वीर ! तव स्पर्द्धामिमामहमभिनन्दामि । तदागच्छ, आत्मनः कलामभिदर्शय ।

कर्णः—वीर ! प्रथमं त्वमेवात्मनः कलां प्रदर्शय ।

कृपाचार्यः—अहमत्र किञ्चित् कथयितुमिच्छामि । अर्जुनो राजकुमारोऽस्ति । अर्जुनस्य प्रतिद्वन्द्वो वीर एष कस्मिन् कुले कस्यां जातावुत्पन्नः किंनामधेयोऽस्तीत्यभिज्ञानं विना कथमेष राजकुमारेण सह प्रतियोगितायां स्थास्यति । तद् ददात्वेष आत्मनः कुलस्य जातेश्च परिचयम् ।

कर्णः—आचार्य ! प्रतियोगितायां कुलस्य जातेश्च काऽपेक्षितता । प्रतिभायाः परीक्षणे जातेः कुलस्य चापेक्षितत्व स्थानस्याभिरक्षणं वा गर्हितः पन्थाः । एषा प्रतियोगितायाः कुत्सा, प्रतिभायाश्चानादरो यदि शिक्षणे परीक्षणे च जातिः कुलं वा पृच्छ्यते ।

कृपा.—इदं सत्यम् तथापि राजकुमारेण सह प्रतिस्पर्द्धावतः परिचय आवश्यक अत एवेदमुच्यते ।

कर्णः—यद्येवम्, तर्हि श्रूयताम् अहं सूतपत्न्या राधायाः पुत्रोनाम्ना राधेयोऽस्मि । एतावानेव मे संक्षिप्तो विस्तृतो वा परिचयः ।

द्रोणः—त्वं सूतपुत्रोऽसि । सूत्रपुत्रस्य तव राजपुत्रेणार्जुनेन सह प्रतियोगिता नास्माकं सम्मता । तद् विरम त्वमस्माद् व्यापारात् अत्र शन्तस्तिष्ठ गच्छवा यथेप्सितम् । अतः परं पुनरेतादृशः साहसः कदापि न कर्तव्यः । तव दुर्विनीततेयं क्षम्यते ।

कर्ण :— आचार्य !

सूतोऽहं सूतपुत्रोऽहं यो वा स्योवा भवाम्यहम् ।
दैवायत्त कुले जन्म ममायत्तं तु पौरुषम् ।।

अपिच —

यस्मिन् समाजे खलु जातिपूजा,
कुल प्रपूज्यं गुणशक्तिहीनम् ।
ज्ञानस्य पण्यं प्रतिभावमानः
स बाधते राष्ट्रहितं समाजः ।।२।।

अतोऽहं भवनां समाजमिमम्—यत्र पौरुषं न पुरुषः पूज्यते, यत्र शक्तिर्न व्यक्तिराद्रियते, यत्र प्रतिभा न जातिः पृच्छ्यते यत्र गुणो न कुलं सम्मान्यते— दूरतः प्रणमामि । किन्त्वहं कथयामि, शृण्वन्तु भवन्तः—समय आगच्छति यदा जाति-व्यक्तिकुलादयः पश्चाद् वर्तिष्यन्ते, पौरुष–प्रतिभा–शक्ति–गुणादीनां समाजे समादरो भविष्यति । तदा एष राधेयोऽपि भवतांश्लाघायाः पात्रं भविष्यति ।

कृपा.—राधेय ! त्वमितो गन्तुं शक्नोषि ।

कर्णः— गच्छामि, आचार्य! गच्छामि । प्रतिभायाः पौरुषस्य चाय मपमानः राष्ट्रहिताय न कल्पिष्यत इति सत्येन मनसा स्वीकर्तव्यमत्रभवभ्दिः । (निष्क्रान्तः)

द्रोणः—समारोहस्य महानन्तराय एव व्यपगतः । तत् समापनवि-धिरनुष्ठातव्यः ।

भीष्मः—समारोहस्यान्तरायो व्यपगतः, किन्तु राजपुत्रवीराणां कृते एज महाबन्तरायः समुपस्थितः । अहमस्य वीरपुरुषस्य कथने आह्वाने च वास्तविकतामनुभवामि ।

द्रोणः—अस्तु इदानीं समारोहस्य समापनविधिरेभिरुद्बोधनवाक्यैः सम्पाद्यते । यूयं युवानः स्नातकाः साम्प्रतमनुशासनीयाः स्थ। तद् युष्माभिः सावधानतया श्रोतव्यमिदसनुज्ञासनवचः—

"ॐ संगच्छध्व संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ।।३।।
"समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति" ।।

"उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत।"

इदानीं कुलगानम्— ( सर्वे उत्थाय समेत्य च )

हे विश्वम्भर हे विश्वविभूषण विश्वेश्वर हे विश्वविभो।
हे करुणामय हे ज्योतिर्मय प्रभापुञ्ज हे विश्ववसो !!
हे विश्वम्भर० ॥

धियं देहि मे ह्रियं देहि मे श्रियं देहि मे देहि मतिम् !
रतिं देहि मे तव चरणेषु देहि विभो मे शुभां गतिम् ॥
हे विश्वम्भर० ॥

जगन्मणे हे व्योमविहारिन् वियद्ध्वंस हे विभाकर !
हर हृदयस्थं तमो मदीयं कुरु प्रकाशं पाहि प्रभो !!

हे विश्वम्भर हे विश्वविभूशण विश्वेश्वर हे विश्वविभो !
ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

द्रोण— ॐ शान्तिः शान्तिः शान्तिः ।

(जवनिकापातः)

॥ इति तृतीयोऽङ्कः ॥

-: × :-

## ॥ अथ चतुर्थोऽङ्कः ॥

(प्रथमं दृश्यम्)

स्थानम् --महाराजदुर्योधनस्य राजसभा। मन्त्री शकुनिः युवराजो दुःशासनः, अन्ये सभासदश्च यथास्थानमुपविष्टाः सन्ति।

दुर्योधनः—मान्याः सभासदः। एकमावश्यकं विषयमधिकृत्य मन्त्रणां कर्तुमियं मन्त्रिपरिषदामन्त्रिताऽस्ति। जानन्त्येव भवन्तो यत् पाण्डवैः सहास्माकं वैरं प्रतिदिनं वर्द्धते। पाण्डवेषु भीमार्जुनावस्माकं कष्टदायिनौ संवृत्तौ। भीमस्य विषये मे मनसि तादृशं भयं चिन्ता वा नास्ति, किन्तु पाण्डवानां मध्यमोऽर्जु

नो मे स्वपतो जाग्रतश्च चिन्ताया विषयः संजातोऽस्ति ।
अप्रतिमधनुर्धरोऽर्जुनो मे सुखस्य बाधको राज्यस्य कण्टक-
मिवोपस्थितोऽस्ति । यावदस्य कश्चन प्रतिद्वन्द्वी नास्माभि-
र्लभ्यते तावदस्माकं शान्तिः कुतः ?

शकुनिः— महाराज ! नात्र चिन्ता कार्या । जीवति शकुनौ भवतामप्रियं कर्तुं कः क्षमः ? मयाऽर्जुनस्य प्रतिद्वन्द्वी लब्धः ।

दुर्यो०— कथमिव ?

शकुनिः— स्मरति भवान् यत् तस्मिन् दिने दीक्षान्तसमारोहे सूतपुत्रो राधेयोऽर्जुनस्य प्रतिद्वन्द्वितायामुपस्थित आसीत् ?

दुर्यो०—स्मरामि, स सूतपुत्रआसीदतः स प्रतियोगितायां भागं ग्रहीतुं नाशकत् ।

शकुनिः— तस्य सूतपुत्रत्वमेव तत्र हेतुर्नासीत् । अहन्तु मन्ये तस्याप्रतिमसाहसं प्रगल्भं वीरदर्पं च विलोक्य तत्समक्षमर्जुनस्य वीरत्वे सन्दिग्धमानसेनाचार्येण छद्मना तस्य निषेधः कृतः । स तदानीमपमानितो भूत्वा समारोहस्थानान्निर्गत आसीत् । अपमानः स तस्य हृदि शल्यमिव प्रविष्टमस्ति । सूतपुत्रो राधेयो मध्यमपाण्डवस्यार्जुनस्य महान् प्रतिद्वन्द्वी संवृतः । तं सादरं सम्मान्य स्वपक्षेकृत्य चास्माभिः स्वं कार्यं साधनीयम् ।

दुर्यो०—माम शकुने ! सत्यं ब्रवीति भवान् । एतत् कार्यं भवतैव सुकरम् । तदस्मिन् कर्मणि भवता कूटनीतावप्रतिहतगतिं स्वीयां मतिमास्थाय प्रवृत्त्यताम् । यतोहि—

यत् कार्यं नहि साध्यते सरलया मत्या मनुष्यैरिह
तत् कार्यं खलु कूटनीतिनिपुणो नीत्या विधातुं क्षमः ।
तस्मान्नीतिविदो नृपाः सुचतुरा मित्राण्यमित्राणि च
पक्षेकृत्य सुसाधयन्ति सकलं स्वार्थं निजं दुष्करम् ॥१॥

शकुनिः—महाराज ! एवमेव । अहं स्वमत्या कार्यं साधयितुं यतिष्ये । शकुनेर्मतिरसाध्यमपि सुसाध्यं कर्तुं क्षमा । तदत्र निश्चिन्तेन स्थातव्यम् ।

दौवारिकः—(प्रविश्य) जयतु महाराज ! एव राधेयनामा कश्चन

धनुर्धरो भवद्दर्शनार्थी द्वारि तिष्ठति ।

दुर्यो०—सादरं प्रवेश्यतामसौ वीरः ।

दौवारिकः—यदाज्ञापयति महाराजः ।

दुर्यो०—(शकुनिंप्रति) मातुल ! शुभलक्षणमिदं प्रतिभाति ।

शकुनिः—न खलु लक्षणमेव शुभम् । अहं तु कार्यमपि सिद्धं मन्ये ।

दौवारिकः - (कर्णेन सह प्रविश्य, कर्णं प्रति) एतु, एतु वीर ! एष महाराजः, उपसर्पतु भवान् ।

कर्णः – (उपगम्य) जयतु महाराज ! एष सूतपुत्रो राधेयः भवन्तमभिवादयते ।

दुर्यो०—वयस्य ! त्वं सूतपुत्रो नासि । वीराणां काचिज्जातिः कुलं वा न भवति । तदिहासनं गृह्यताम् । (स्वसमीपस्थमासनं निर्दिशति)

कर्णः – महाराज ! एष सूतपुत्रो राधेयस्तत् स्थानं नार्हति । तदहमिहैव भूमावुपविशामि । (उपवेष्टुमिच्छति)

दुर्यो०—न हि, न हि । त्वमत्रैवोपविश । (उत्थाय स्वसमीपस्थे आसने तमुपवेशयति) ।

कर्णः—(उपविश्य) महाराज ! सम्मानमिमं राधेयः कदापि न विस्मरिष्यति ।

शकुनिः—वीर ! एष सम्मानस्तवोचित एव । नवाप्रतिमं वीरत्वमार्यजातेर्गौरवम् । त्वादृशेनैन वीरपुत्रेण वीरप्रसवा भूमिरियं धन्या । तन्मनसि मा खेदं वह । तस्मिन् दीक्षान्तसमारोहे कृतोऽसावसामाजिकोऽपमानस्त्वया हृदयान्निःसार्यताम् । अपमानोऽसावस्माकं मनसोऽपि खेदाय समभूत् ।

दुर्यो०—माम ! खेदं तं वीरमिमं यथोचितं सत्कृत्यापनोदयितुमिच्छामि ।

शकुनिः—प्रथमः कल्पः । जानाम्यहं भवतो गुणग्राहिताम् । तद् यथेप्सितं विधीयताम् ।

दुर्यो०—एष वीरवरो राधेयोऽस्माभिरस्माकं परममित्रत्वेनाङ्गी-क्रियते। मित्रताया अस्याः परिचायकम् अङ्गदेशस्याधिपत्यं चास्मै प्रदीयते।

शकुनिः—साधु, महाराज! साधु। भवतो गुणग्राहितेयमभिनन्दनीया, अनुकरणीया चास्ति।

कर्णः—महाराज! कृतज्ञोऽहं भवतो गुरुतरस्यास्य सम्मानस्य। भूमावुत्पन्नस्य पुष्पस्य मस्तके स्थापना पुष्पस्य न, अपि तु स्थापयितुरेव गौरवमभिव्यनक्ति। अहमुपकारमिमं देहान्तरेष्वपि न विस्मरिष्यामि।

दुर्यो०—माम शकुने! राधेऽयोद्यास्माकं महत्तरः प्रियवयस्यः सञ्जातः। तदस्य सम्माने प्रीतिभोज्यं नृत्यगीतादयश्चायोज्यन्ताम्।

शकुनिः—यत् प्रभविष्णवे रोचते।

(सर्वे उत्थाय यथाक्रमं निर्गच्छन्ति)

(जवनिकापातः)

(द्वितीयं दृश्यम्)

स्थानम्—दुर्योधनस्य रङ्गशाला। राजा दुर्योधनः, अङ्गदेशाधिपतिः कर्णः, मन्त्री शकुनिः, युवराजो दुःशासनः, अन्ये सभासदः, नृत्यगीतादिकलाकाराश्च यथास्थानमुपविष्टाः सन्ति। नर्तकी प्रविश्य राजानं प्रणम्य च एकस्मिन् भागेऽधोमुखी तिष्ठती।

शकुनिः—लज्जावति! विहाय लज्जां गीयतां काचन उन्मादयित्री गीतिः। प्रचुरं पुरस्कारं प्राप्स्यति। को न जनाति महाराजस्य गुणग्राहिताम्! तदारभस्व।

(वादका वाद्यानि सज्जीकुर्वन्ति, नर्तकी नृत्यन्ती गायति)

अद्य मनो मे नास्ति मदीयम्।
विहरति नभसि नमस्यो मेघः,
विलसति चपला तेन सगर्वा,
विलसनमेतत् क्षणप्रभायाः
न हि सखि! मे मनसः स्पृहणीयम्।
दूरे दयितः किं करणीयम्, अद्य मनो मे नास्ति मदीयम्॥

नृत्यति केकी प्रियया साकम्,
मन्द्रध्वनिना नदाति वारिदे,
कुत्र गतो मे मनोमयूरः ? नहि सखि ! किञ्चिन्मे रमणीयम्।
दूरे दयितः किं करणीयम्, अद्य मनो मे नस्ति मदीयम् ॥
मेघालोके विरहिजनस्य,
हृदये दुःख भवति विचित्रम्,
मे मनसो यद् दुःखमिदानीम्,
अति कठिन तन्नहि कथनीयम् ।
दूरे दयितः किं करणीयम्,
अद्य मनो मे नास्ति मदीयम् ॥२॥
(नृत्यावसाने समवेतः करतलध्वनिः)

सर्वे–वाढम्, वाढम् ।

दौवारिकः–(प्रविश्य) जयतु महाराज ! तत्रभवान् पितामहो भवन्तं द्रष्टुमिहागतः ।

दुर्यो–(ससम्भ्रममुत्थाय) नर्तकि ! पूज्यचरणाः पितामहाः समागताः; अतोऽस्माभिर्विरम्यते । त्वमिमं हारमुपहाररूपं गृहाण । (हारं ददाति, नर्तकी तं सादरं गृहणाति) माम शकुने । प्रियवयस्यं राधेयं मदीये विश्रामकक्षे विश्रामयतु भवान् । अहमेकान्तमिच्छामि ।

सर्वे०–यदिच्छति महाराजः । (निर्गच्छन्ति)

दुर्यो०–दौवारिक ! अह पूज्यपितामहं द्रष्टुमिच्छामि ।

दौवा०–एतु, एतु महाराज ! एतु । एष पूज्यपितामहो भवते दर्शनं वितरितुकामो द्वारि तिष्ठति ।

दुर्यो०–(दौवारिकेण सह निर्गत्य भीष्मपितामहेन सह प्रविश्य) पूज्यपादा आसनमिदमनुगृह्यताम् । (स्वकीयमासनं निर्दिशति, उपविष्टे च तत्र पितामहे उपविशति)

भीष्मः–वत्स ! श्रुतं मया यत् पाण्डुपुत्रैः सह तव वैरभावो वर्द्धते । तेनैव भावेन त्वया एष सूतपुत्रो राधेयः स्वपक्षे कृतः, अङ्गदेशस्याधिपत्ये प्रतिष्ठापितश्च ।

दुर्यो०–पितामह ! सर्वमेतत् सत्यम् । भीयार्जुनयोर्वर्द्धमानं वीरत्वं मे हृदि शल्यायते । अर्जुनस्तु मम स्वपतो जाग्रतो वा

चिन्ताया विषयः सञ्जातः। राधेयस्तस्य महान् प्रतिद्वन्द्वी। अत एव मया स स्वपक्षे कृतः।

भीष्मः–एतत् त्वया कुलस्य जातेश्च मर्यादाया विरुद्धमाचरितम्। सूतपुत्रस्य राजसिंहासनाधिरोहः प्रजाया हिताय न सम्पत्स्यते। शासने शूद्रस्याधिकारः श्रुतिस्मृतिविहितो नास्ति। द्विजातेः सेवैव शुद्रस्य परमं कर्तव्यम्। यथाह मनुः–

एकमेव हि शुद्रस्य प्रभुः कर्म समादिशत्।
एतेषामेव वर्णानां शुश्रुषामनसूयया ॥३॥

दुर्यो०–पितामह! मनोरेषा व्यवस्था समाजस्य राष्ट्रस्य च हिताय न। अनया व्यवस्थया मानवसमाजस्य महत्त्वपूर्णस्यैकस्याङ्गस्य विकासो बाधितो भवति। शासनं स एव कर्तुमर्हति यस्मिन् शासनस्य क्षमताऽस्ति। क्षमताहीनो राजपुत्रः क्षत्रियो वा राजसिंहासनस्याधिकारी न। क्षमता पूज्या न तु जातिः कुलं वा। अत एव मया राधेयः सत्कृत्याङ्गदेशस्याधिपत्ये नियोजितः। राजनीतौ मातुलं शकुनिःमेवाहं प्रमाणत्वेनाश्रयामि।

भीष्मः–(सक्रोधम्) शकुनिः! कुटिलवृत्तिः शकुनिः पाण्डवानां विरोधी अस्ति। तस्येयं कूटनीतिः पाण्डवानामेव न, अस्माकमप्यहिताय सम्पत्स्यते। तद् विरम त्वमस्यादसदीप्सितात्।

दुर्यो०–पितामह! अहमात्मनो हितमहितञ्च सम्यगवगच्छामि। राधेयो मया मित्रत्वेनाङ्गीकृतः। 'अङ्गीकृतं सुकृतिनः परिपालयन्ति' इति सिद्धान्तवचोऽहं प्राणव्ययेना पि परिपालयिष्यामि।

भीष्मः– वत्स! पुनर्विचारय। न कदापि श्रद्धेयं शकुनेर्वचः। अहं गच्छामि।

(उत्थाय निर्गच्छति। दुर्योधन उत्थाय तमेवावलोकयन् किमपि विचारयन्निव निष्क्रामति।)

(जवनिकापातः)

॥ इति चतुर्थोऽङ्कः ॥

## ॥ पञ्चमोऽङ्कः ॥

### (प्रथमं दृश्यम्)

स्थानम्–दुर्योधनस्य मन्त्रणागृहम्। दुर्योधनः, शकुनिः, कर्णश्च यथास्थानमुपविष्टाः सन्ति।

दुर्यो०–अद्य मताभारतयुद्धस्य चतुर्दशं दिवसम्। पितामहो भीष्मो महता शौर्येण दश दिनानि युद्धं कृत्वा, प्रतिदिनं पाण्डवानां दशसहस्रसैन्यानां शिरांसि शरैर्निपात्य रणशिरसि शरशय्यामधितिष्ठति। आचार्यद्रोणोऽपि दिनत्रयं युद्धं कृत्वा वीरगतिं प्रापितः। आचार्यस्य सेनापतित्वे वीरपुत्रस्याभिमन्योरन्यायेन वधोऽस्माकं भृशमनुतापाय लज्जायै च वर्तते। षोडशवर्षीयस्याभिमन्योरीदृशमनुपमं वीरत्वं भरतकुलस्य प्रतिष्ठा आसीत्। तस्य बालकस्य वधाय कृतमस्माभिश्छलच्छम भारतानामस्माकं शिरांस्यवनमयति।

शकुनिः–युद्धे विजयो येन केनाऽप्युपायेन लब्धव्य इति राजनीतिसम्मतम्। उक्तञ्च —

युद्धं नैवहि कर्तव्यं युद्धे हानिकरं महत्।
तस्मात् सर्वप्रयत्नेन युद्धं परिहरेत् सुधीः ॥१॥

उपस्थिते महायुद्धे जयमेव विचिन्तयेत्।
युद्धे जयो भवेन्न्यायेनान्येन वा भवेत् ॥२॥

तदस्मिन् विषये लज्जाया अनुतापस्य वा कथैव नास्ति; तदानीमभिमन्योर्वध आवश्यक आसीत्। अस्माभिरसौ वैधेनावैधेन वा विधिना विहित इति चिन्तनीयं नास्ति; चिन्तनीयोऽस्त्यस्मिन व्यतिकरेऽस्माकं मित्रस्य सम्बान्धिनश्च जयद्रथस्य वधः। येनेदानीमेषा समस्या समुपस्थिताऽस्ति यदद्य कौरवसेनाया आधिपत्ये को नियोज्येत।

दुर्यो०–आम्। एतद् विचारणीयं वर्त्तते। अहन्त्विदानीं द्वावेव वीरौ कौरवसेनाया भारमुद्वोढुं क्षमौ विचिन्तयामि–आचार्यपुत्रमश्वत्थामानं प्रियवयस्यं राधेयञ्च। भवानत्र किं मन्यते।

शकुनिः–महाराज! यदि भवान् मे मतमाद्रियते तर्हि प्रियवयस्यं

राधेयमेव सैनापत्येऽधिकरोतु। अश्वत्थामा त्विदानीं पितुः शोकेनापीडितोऽस्ति। स सेनापतेर्भारमुद्वोढुमशक्तः प्रतिभाति मे।

दौवारिकः—(प्रविश्य) जयतु महाराज! आचार्यपुत्र अश्वत्थामा भवद्दर्शनाभिलाषी द्वारि तिष्ठति।

दुर्यो०—तं सादरं प्रवेशय।

दौवा०—यदाज्ञापयति महाराजः। (निर्गत्याश्वत्थाम्ना सह प्रविश्य च)

दौवा०—(अश्वत्थामानं प्रति) एतु, एतु आचार्यपुत्र! एष महाराजः उपसर्पतु भवान्।

अश्व०—(उपगम्य हस्तमुद्यम्य) विजयतां महाराजः।

दुर्यो०—(उत्थाय) अनुगृहीतोऽस्मि। आसनमिदमलङ्क्रियताम्। (आसनं निर्दिशति, उपविष्टे गुरुपुत्रे स्वयमुपविशति)

अश्व०—महाराज! अहं किञ्चिन्निवेदयितुमिहागतोऽस्मि।

शकुनिः—निवेद्यताम्, वयं श्रोतुं समुत्सुकाः स्मः।

अश्व०—जानात्येव महाराजो यदहमिदानीं पितृवधशोकेनापीड़ितोऽस्मि। इमं शोकमहमन्यायेन गुरोर्वधकारिणां पाण्डवानां बधेन परिमार्जितुमिच्छामि। तन्ममहाराजोऽद्य मां सैनापत्ये प्रतिष्ठाप्य पश्यतु महारणे पाण्डववधमहोत्सवम्।

दुर्यो०—गुरुपुत्र! एतत् सत्यम्। त्वं महावीरोऽसि। त्वं समस्तसैन्यसमेतानां पाण्डवानां वधं कर्तुं समर्थोऽसि। किन्त्वद्युनैवास्माभिरेष राधेयः कौरवसेनानायकत्वेऽधिकृतः। तत् कथमेषोऽधिकारस्तस्मात् परावर्त्येत?

अश्व०—सूतपुत्रो राधेयः कौरवसेनाधिपत्येऽधिक्रियते; किमिदं भरतकुले जातानां भवतामस्माकं च प्रतिष्ठाया अनुरूपमस्ति? शूद्रस्यास्य ईदृशः सम्मानोऽस्माकमुपहासाय सम्पत्स्यते।

कर्णः—अरे ब्राह्मणकुलकलङ्क! सेनापतित्वे वीरत्वं सम्मान्यतेऽथवा जातिः कुलंवा? त्वं ब्राह्मणोऽसि, अत एव पूज्योऽसि चेत, यजमानगृहं गत्वा पौरोहित्यं समाचर। समरे तव स्थानं किम्?

अश्व०—(सक्रोधम्) अरे सूतकुलकलङ्क! त्वं मे ब्राह्मणत्वमुपहससि।

किं त्वया कौरवाणां पाण्डवानाञ्च शस्त्रास्त्रगुरोर्विप्रकुल-भूषणस्य मत्पितुर्वीरत्वं न दृष्टम् ?

कर्णः—दृष्टम् । दृष्टोऽस्माभिस्तव पितुः पुत्रवधशोकेन रणक्षेत्रे शस्त्रत्यागः, स्वयं मृत्योरालिङ्गनाय प्रस्तुतस्य तस्य कापुरुषेण धृष्टद्युम्नेन शिरश्छेदश्च । किमेतद् वीरत्वस्योचितम् ? वीरस्तु प्राणव्ययेनापि वैरस्यापमानस्य च प्रतिशोधं करोति, न तु कातर इव प्राणान् विजहाति ।

शस्त्रं नैव जहाति वीरपुरुषः शोकाद् भयाद् वा स्वयं
वैरस्य प्रतिकारमेष कुरुते शस्त्रेण नैवाश्रुभिः ।
पित्रा ते समरे स्वयं विजहता शस्त्रं पुरो वैरिणां
मृत्युर्योऽधि गतः स किं समुचितो वीरस्य वैरस्य वा ॥४॥

अश्व०-अरे रे शूद्राधम ! त्वं पृथिव्यां समस्तवीराणामाचार्यस्य मत्पितुर्वीरत्वं विनिन्दसि । तदेहि, अहमिदानीं तव दन्तभङ्गं जिह्वोच्छेदं च करोमि । (युद्धाय प्रस्तुतो भवति)

कर्णः—अरे ब्राह्मणाधम ! त्वं मामाह्वयसि । तदागच्छ; पश्याम्यहं तव ब्राह्मणत्वं वीरत्वञ्च । (इत्यभिधाय युद्धे प्रवर्त्तते, उभौ बाहुयुद्धे प्रवृत्तौ दृष्ट्वा दुर्योधनः शकुनिश्च तौ निवारयतः ।)

दुर्यो०-मित्र राधेय ! गुरुपुत्रेण सह युद्धमेतत् ते न शोभते ।

शकुनिः—आचार्यपुत्र ! साम्प्रतं स्वपक्ष्येण सह युद्धमसाम्प्रतम् । तद् विरमतु भवानस्माद् वैरभावात् ।

अश्व०-अमात्य ! पितृवधशोकादहमतीव पीड़ितोऽस्मि । शत्रूणां वधं विधाय तं शोकं प्रतिशोधयितुमिच्छामि । तदेकाहमपि मां सैनाधिपत्येऽधिकरोतु महाराजः, पश्यतु च मे पौरुषम् ।

कर्णः—ब्राह्मणपुत्र ! शोकाकुलस्त्वं समरमारोढुं कथं शक्ष्यसि ? तद् गृहं गत्वाऽश्रुभिः शोकपरिमार्जनं कुरुष्व ।

अश्व०—अरे सूतपुत्र ! अधुनाऽपि तव जिह्वा तथैव प्रचलति । तत् तिष्ठ । यावत् त्वं मृत्युं नाधिगच्छसि तावदहं समरे शस्त्रं न ग्रहीष्यामि । एष मया शस्त्रपरित्यागः कृतः ।

कर्णः—(विहस्य) एष शस्त्रपरित्यागस्तु तव कुलपरम्परा । पिता

ते समरे शस्त्रं परित्यज्य मृत्युं प्राप्तः, त्वं शस्त्रं विहाय गृहे तिष्ठ।

शस्त्रत्यागस्तु विप्राणां धर्म एव सनातनः।
शूराणां परमो धर्मो युद्धे शस्त्रपरिग्रहः ॥३॥

तव पित्रा ब्राह्मणधर्मप्रतिकूलत्वमाचरितम्, त्वं पुनः स्वजातिधर्ममापन्नोऽसि। तद् गच्छ।

अश्व०—गच्छामि रे सूतापसद! गच्छामि। त्वं समरे शुनी मृत्युमेष्यसि, गृध्रवलिर्भविष्यसि। पृथिव्यां सर्वधनुर्धराणामाचार्येण मम पित्रा यत् कृतं तस्येतिहासः साक्षी, इदं राजकुलं साक्षि। किन्तु तव पित्रा किं कृतम्?

(इत्युक्त्वा सक्रोधं पश्यन् निर्गच्छति)

दुर्यो०—वयस्य! गुरुपुत्रस्य शस्त्रपरित्यागः, तव मृत्योः प्रतिक्षणञ्च समयेऽस्मिन्नस्माकं हिताय नास्ति। तदेहि युद्धयात्राया व्यवस्था विधीयेत। (शकुनिं प्रति) माम! प्रियवयस्यस्य राधेयस्य सेनापतित्वमुद्घोष्यताम्।

शकुनिः—यदिच्छति महाराजः। (सर्वे निर्गच्छन्ति)

जवनिकापातः

(द्वितीयं दृश्यम्)

स्थानम्—गङ्गातटम् समयः - सूर्योदयकालः। कर्णः सूर्यपूजायां संलग्नो दृश्यते।

कर्णः—(बद्धाञ्जलिरुदीयमानं भास्करं प्रणमन्)

हे विश्वम्भर विश्वविभूषण विश्वेश्वर हे विश्वशिभो।
हे करुणामय हे ज्योतिर्मय प्रभापुञ्ज हे विश्ववसो॥ इत्यादि।

ब्रह्माण्डसम्पुरकलेवरमध्यवर्ति
चैतन्यपिण्डमिव मण्डलमस्ति यस्य।
आलोकितोऽपि दुरितानि निहन्ति यस्तं
मार्तण्डमादिपुरुषं प्रणमामि नित्यम् ॥१॥

(पादध्वनिमाकर्ण्य पश्चादवलोकते)

भिक्षुको ब्राह्मणः–(कर्णमुपेत्य) विजयस्व वीर।

कर्णः—स्वागतं ब्राह्मणदेवस्य। एष कर्णो भवन्तमभिवादयते।

ब्राह्मणः—विजयस्व राजन्।

कर्णः—ब्राह्मण ! इदं गङ्गातटम्। भवतः सत्कारार्थमत्र किमपि मे पार्श्वे नास्ति। तद् ब्रवीतु, भवते किं क्रियेत ?

ब्राह्मणः—राजन् ! त्वं धर्मे जागरितोऽसि, दानशीलतायां त्वं शिविदधीचिप्रभृतिभ्यः परोवर्त्तसे, 'परोपकराय सतां विभूतयः' इति ते आदर्शवचः। त्वादृशस्य सत्पुरुषस्य दर्शनेनैव कृतार्थोऽस्मि।

कर्णः—ब्राह्मण ! इति तु प्रशंसावचनम्। त्वदर्थं मया किं करणीयमस्ति तत् समादिश।

ब्राह्मणः–राजन् ! अहं दरिद्रब्राह्मणोऽस्मि। किञ्चिद् याचितुमहं भवत्सकाशमिहागतोऽस्मि। किन्तु संकोचो मां बाधते किमपि कथयितुम्।

कर्णः—ब्राह्मण ! संकोचो न क्रियताम्।

याचतां याचतामन्नं वासो वासं धनं तथा।
राज्यमेतन्मदीयं वा क्षणिकं क्षुद्रजीवनम् ॥२॥
भवेन्निराशो याचित्वा जातु मेघो हि सागरम्।
किन्तु कदाचित् कर्णस्य याचको नैव निष्फलः ॥३॥

ब्राह्मणः—राजन् ! एतत् सत्यम्। किन्त्विदानीं साधनहीनं भवन्तं विलोक्य किमपि याचितुं नोत्सहे।

कर्णः—ब्राह्मण !

राज्यञ्च वसु देहश्च भार्या भृत्यास्तु ये च मे।
यच्च लोके ममायत्तं तद् दानाय सदोद्यतम् ॥४॥

तद् यदिच्छसि स्पष्टं ब्रूहि।

ब्राह्मणः–राजन् ! भवत्पार्श्वे इदानीं कवचकुण्डले विहाय किमप्य–

न्यद् वस्तु नावलोक्यते। तत् कवचकुण्डले एव मे प्रदाय कृतार्थीकरोतु मां महाराजः।

कर्णः—(साश्चर्यम्) कवचकुण्डले! सत्यं ब्रूहि ब्राह्मण! त्वं कोऽसि, त्वं साधारणभिक्षुको न प्रतिभासि मे।

ब्राह्मणः—(सलज्जम्) कर्ण! अहं देवराज इन्द्रोऽस्मि। अर्जुनस्य प्राणरक्षायै मया त्वया सह छलमेतत् कृतम्। त्वं कवच-कुण्डलप्रदानेऽसमर्थोऽसि चेदहमितो निराशो निवृत्य स्वं स्थानं प्रतिगच्छामि।

कर्णः—नहि, देवराज! एतन्न भविष्यति। मम गृहादद्यावधि कोऽप्यर्थी निराशो न निवृत्तः। अद्याऽहं धन्योऽस्मि यत् स्वयं देवराज इन्द्रो भिक्षुको भूत्वा मां याचितुमागतः। अद्य धरेयं धन्या यत् स्वर्गस्तां भिक्षितुमायातः। एतादृशो यशा-नवसरो मे कदा सुलभो भविष्यति! तद् गृह्यतां देवराज! कवचकुण्डले इमे।

(इत्युक्त्वा शरीरात् कवचकुण्डले उत्तार्य सादरमिन्द्राय समर्पयति। एको दिव्य आलोकः कर्णस्य शरीरे निपतति। तस्मिन्नालोके तस्य शरीरमुद्भासितं भवति। कर्णस्तमा-लोकं प्रणमति।)

इन्द्रः—(कवचकुण्डले गृहीत्वा) पृथ्वीपुत्र! त्वं धन्योऽसि। त्वादृशेन पुत्रेण माता पृथ्वीयं धन्याऽस्ति। निःसन्दिग्धमद्य धरेयं स्वर्गादुच्चतराऽस्ति। तद् गच्छाम्यहम्। साधयस्व वीर! स्वशक्त्या सर्वाणि कार्याणि। प्रकाशय च भूतलमिदं स्वकीये-नामिततेजसा। तव तेजः सर्वेषां नमस्यं भविष्यति।

(इत्युक्त्वा निर्गच्छति, निर्गत्य पुनः परावृत्य च)

इन्द्रः—कर्ण! त्वां प्रति मया यत् पापमाचरितं तेन मे रथो भूत-लान्नोत्तिष्ठति। पापभारमिममादाय स्वर्गं गन्तुमहमसमर्थो-ऽस्मि। तन्मत्तोऽपि किमप्यादाय पापमुक्तं कुरुष्व माम्।

कर्णः—देवराज! अहं प्रतिदानं न गृह्णामि। अधुनैवाहं भवता शिविदधीचिप्रमृतीनां पङ्क्तौ स्थापितोऽस्मि। तां पङ्क्-क्तिमहं प्रतिदानमादाय कलङ्कितां न करिष्यामि। किन्तु

भवतेऽहं वचनं ददामि । अनेन कवचकुन्डलप्रदानेन मया किमपि पुण्यफलं लब्धं चेत् तेन पुण्यफलबलेन भवतो रथो भूतलादुत्तिष्ठतु, भवांश्च ससुखं स्वर्गं प्रयातु । किन्त्विदं स्मर्यंताम्-येनोद्देश्येन भवता इदं दुष्कर्मं कृतम्, तस्य पूर्तिः कदापि न भविष्यति । भवता मम शरीरात् कवचकुण्डले अपहरताऽपवादोऽप्येष दूरीकृतः यत् कवचकुण्डलबलेन कर्णो महाभारतस्य विजेता आसीत् । तद् गच्छतु भवान् अर्जुनस्य रक्षार्थं कमप्यन्यमुपायं विचिन्तयतु । एष स्वायत्तपौरुषः कर्णः स्वशक्त्या सुरक्षितोऽस्ति ।

(इन्द्रो लज्जावनतमुखः स्वर्ग प्रतिष्ठते)

(जवनिकापातः)

-:×:-

(तृतीयं दृश्यम्)

स्थानम्-कुरुक्षेत्रस्य युद्धभूमिः । कणः युद्धशिविरे किमपि विचारयन् दृश्यते । उभयोर्द्वारपक्षयोः प्रहरिणौ द्वौ खड्गहस्तौ अप्रमत्तौ स्थितौ । एका शुभ्रवर्णा, शुभ्रवस्त्रा, शुभ्रकेशा वृद्धा द्वारदेशमायाति ।

एकः प्रहरी-(वृद्धां विलोक्य) आर्ये ! का त्वम्, किमर्थमिहागतासि ?

वृद्धा-भद्र ! अहं सेनापतिं द्रष्टुमिच्छामि । तत् तस्मै निवेदय ।

प्रहरी-आर्ये ! त्वमत्रैव तिष्ठ । यावदहं भर्तुः शासनं प्रतीष्य प्रत्यावर्त्ते ।

वृद्धा-तथास्तु ।

प्रहरी-(अन्तः प्रविश्य सेनापतिमभिवाद्य) आर्य ! काचन वृद्धा भवद्दर्शनमभिलषन्ती द्वारि तिष्ठति ।

कर्ण-सादरं तामानय ।

प्रहरी-यथाज्ञापयत्यार्यः । (वृद्धां प्रत्यागत्य) आर्ये ! सेनापतिना त्वमनुमतदर्शनासि तदुपसर्प तम् । (अन्तर्निर्दिशति) (वृद्धा सेनापतिमुपगम्य तूष्णीं तिष्ठति)

कर्णः-देवि । का त्वम्, किमर्थमिहागतासि ? एष सूतपुत्रः राधेयस्त्वामभिवादयते ।

वृद्धा—वत्स ! चिरञ्जीव । पुत्रक, त्वं सूतपत्न्या राधायाः पुत्रो न। तव माता इयं मन्दभागा कुन्ती अस्ति ।

कर्णः—(उत्थाय कुन्त्याश्चरणावुपस्पृश्य) मातः ! अद्य मे जीवनं धन्यम् । युद्धारम्भे मया मातुराशीर्वादो लब्धः । तदिहास्यताम् । (आसनं निर्दिशति)

कुन्ती— (उपविश्य) वत्स ! त्वमप्युपविश । (कर्णः उपविशति) पुत्र ! अद्य तव मुखात् 'मातः' इति श्रुत्वा धन्याऽस्मि । त्वं राधेयो न भवसि कौन्तेयोऽसि । त्वं पाण्डवानामग्रजोऽसि । यथा मया त्रयः पुत्राः प्राप्तास्तथैव त्वं मे प्रथमकुक्षिमागतः । किन्तु तदानीमहं कुमारिका आसम् । मया समाजभयात् त्वां प्रति दुर्वृत्तमाचरितं, तत् क्षमस्व ।

कर्णः—देवि ! अहमिदानीमात्मनो जन्मवृत्तान्तं श्रोतुं नेच्छामि । मया भगवतः सूर्यस्य मुखात् सर्वं विदितमस्ति । मातः ! त्वया मातुःकर्तव्यस्य प्रतिकूलमाचरितम् । त्वया मातृसमाजः कलङ्कितोऽस्ति । तिर्यग्योनिष्वपि त्वादृशी माता न दृश्यते ।

गर्भस्थं निजपुत्रकं प्रसविनी रात्रिन्दिवं सेवते,
जातं तं विविधोपचारनिचयैः पुष्णाति साऽहर्निशम् ।
प्राणेभ्योऽप्यधिकं प्रियं च मनुते दृष्ट्वा परं मोदते,
मातस्त्वं किमभूः कठोरहृदया पुत्रादिनी सर्पिणी ॥१॥

अस्तु, त्वं मत्समीपमिह किमर्थमागता, स्पष्टं ब्रूहि ।

कुन्ती—वत्स ! अहं त्वदन्तिकं महतीमाशामादाय समागताऽस्मि । अहमिदानीं पञ्चपाण्डवानामेव न षट्पाण्डवानां माता भवितुमिच्छामि । तत् त्वं पाण्डवानामग्रजो भव, तैः सह युद्धे प्रवृत्तो मा भव ।

कर्णः—मातः ! मया ज्ञातं यत् त्वं किमर्थमागतासि । अद्य मे वर्द्धमानां शक्तिमवलोक्य सर्वे चिन्तिताः सन्ति, सर्वे मामङ्गीकर्तुमुत्सुकाः सन्ति । तस्मिन् दिने दीक्षान्तसमारोहे सर्वेषां समक्षं यदाऽहं 'सूतपुत्र शूद्रः' इति कृत्वाऽपमानितः क्रियमाण आसम् तदा त्वं जवनिकाभ्यन्तरं राजमहिषीणां मध्ये स्थिता सर्वमाकर्णयन्त्यासीः । त्वयि एष साहसो नाभवत् यत् त्वं

सर्वेषां समक्षमागत्येदमभिभाषेथा यदयं सूतपुत्रो राधेयो नास्ति, अर्जुनवदयमपि पाण्डुपुत्रोऽस्ति, राजकुमारोऽस्ति। तदानीं तव गौरवमयं राजमहिषीपद प्रियमासीत्, न तु कलङ्कित कर्णस्य मातृपदम्। इदानीमपि ते कर्णः प्रियो नास्ति, अर्जुनस्य प्राणाः प्रियाः सन्ति।

मातः! त्वं विलम्वात् मदन्तिकमागतासि। अहमतिदूरं गतोऽस्मि। ततः परावर्त्तनं मे कठिनमस्ति। अहं दुर्योधनस्य ऋणमावहामि। मे रोम रोम दुर्योधनस्य कृतज्ञमस्ति। तेन शूद्रस्य मे यः सम्मानः कृतः, तस्य प्रतिदानमहं प्राणव्ययेनापि कर्तुमीहें। दुर्योधनमहं मध्येधारं न विहास्यामि। किन्तु त्वं मे जन्मदात्री असि, मत्समीपमाशामादाय समागतासि। तत् तुभ्यमहं वचनं ददामि-अर्जुनं विहायान्यं कमपि भ्रातरमहं रणे न हनिष्यामि। अर्जुनस्य वधं कृत्वाऽहं त्वत्समीपमागमिष्यामि। अहमसहायानां सहायोऽस्मि, दीनानां बान्धवोऽस्मि। दुर्योधनस्य विजये संजातेऽहं तव पुत्रत्वेन त्वया सह स्थास्यामि। त्वं पञ्चपाण्डवानां माता वर्त्तिष्यसे।

कुन्ती—पुत्र! अहं मन्दभागाऽस्मि। पुत्रादेवाहं निष्फलमनोरथा गच्छामीति मे दुर्दैवस्यैव विलसितम्। तत् त्वं सुखेन तिष्ठ। गच्छाम्यहं मन्दभागा। (अञ्चलेनाश्रूणि परिमार्जयति)

कर्णः—मातस्त्वं गच्छ। तव कातरे अक्षिणी दृष्ट्वा मे हृदयं निश्चये दृढ़ं न स्थास्यति। अस्यां स्थितौ भावी समाजो मां धिक्करिष्यति। मत्समीपमागन्तुम्, मामभिज्ञातुञ्च तवाभिजातसमाजेन विलम्बः कृतः। अद्य महाभारतस्यैव न, मम जीवनस्यापि निर्णायकं युद्धमस्ति। अस्मिन् युद्धे साफल्यमधिगन्तुमहं मे मातुराशीर्वादमभिकामये।

(कर्णः मातुश्चरणयोर्धूलिं मस्तके धारयति, कुन्ती तस्य मस्तकमाघ्रायाञ्चलेनाश्रूणि परिमार्जयन्ती विषण्णमना गृहं प्रत्यावर्त्तते।)

(जवनिकापातः)

## (चतुर्थं दृश्यम्)

स्थानम्–समरभूमिः । एकतः कर्णः शल्येन सारथिना वाह्यमानं रथमारूढः प्रविशति, अपरतोऽर्जुनः सारथिना कृष्णेन सह रथारूढः कर्णस्य सम्मुखमायाति ।

कर्णः–(अर्जुनं विलोक्य) मध्यमपाण्डव ! एतत् तव महत् सौभाग्यं यत् स्वयं लोकनायकः कृष्णस्ते सारथित्वे स्थितः । अस्य रथचालकत्वे त्वं सुरक्षितः सन् निर्भयं समरे विचरसि । पश्य, अद्य त्वं कर्णस्य सम्मुखं स्थितोऽसि । तत् सर्वथा सावधानो वर्त्तस्व । एष विलक्षणनीतिमान् कृष्णः असौ ते ध्वजस्थितो महावीरो हनुमानप्यद्य तव रक्षां कर्तुं समर्थौ न ।

अर्जुनः–राधेय ! भूतले रथसञ्चालने सर्वाधिकः कुशलः शल्यस्तव रथसञ्चालनं करोति । त्वमप्यप्रतिमधनुर्धरोऽसि । सर्वमेतदद्य समरे प्रत्यक्षीभविष्यति । कथनस्य विकत्थनस्य वा का अवश्यकता ? शस्त्रप्रयोगं कुरु ।

कर्णः–आचार्यद्रोणस्य प्रियशिष्य, धनुष्मतामग्रेगण्य, कौन्तेय ! अद्यावयोर्निर्णायकं युद्धं भविष्यति । कौरवसेना पाण्डवसेना च दूरे स्थिते विलोकयतामावयोर्द्वन्द्वयुद्धम् । तदग्रत आयाहि, बाणप्रहारं कुरुष्व ।

अर्जुनः–त्वमेव तावत् प्रथमं शरप्रयोगं कुरु ।

कर्णः–अस्तु, शल्य ! रथमग्रतो नय ।

शल्यः–यदाज्ञापयत्यायुष्मान् । (रथवेगं निरुध्य सहसा विरम्य च) आयुष्मन् ! शिथिलीकृतेऽपि प्रग्रहे वाजिनो नाग्रे वर्द्धन्ते, रथश्च नाग्रेसरति । मन्ये, रथचक्रं भूतले निविष्टम् ।

कर्णः–(सशरं धनुः रथे स्थापयित्वा, रथादवतीर्य, रथचक्रं विलोक्य च) सारथे ! सत्यं ब्रवीषि, रथचक्रं भूतले निविष्टमस्ति, आश्चर्यमेतत् । तद् रश्मयो नियम्यन्ताम्; यावदहं भूतलाद्रथचक्रं निष्कासयामि ।

शल्यः–तथास्तु । (रश्मिनियमनं करोति, कर्णः स्कन्धमारोप्य रथं निष्कासयितुं यतते, कृष्णस्तु तथाविधं विलोक्यार्जुनं प्रति)

कृष्णः–अर्जुन ! इदानीमवसरो लब्धः । राधेयस्योपरि शरप्रहारं कुरु । रथचक्रे निष्कासिते अयमवध्यो भविष्यति ।

अर्जुनः–हृषीकेश ! एष राधेय इदानीं निरस्त्रोऽस्ति । अस्त्ररहिते शस्त्रप्रयोगो वीराणामुचितो न ।

कृष्णः—इदानीं किमुचितमनुचितं वेति त्वया न विचार्यताम्। उचितमनुचितं वा सर्वं मयि विन्यस्य यथाऽहं कथयामि तथा विधीयताम्। बुद्धिमन्तोऽवसरं नोपेक्षन्ते। तत् शरप्रहारं कुरु।

अर्जुनः—यथादिशति लोकनायकः। (कर्णोपरि तीक्ष्णशरनिपातं करोति, कर्ण आहतो भूत्वा, 'आह' इत्युच्चार्य भूमौ निपतति कृष्णः अर्जुनश्च द्रुतं तमुपसृत्यावनतमुखौ तिष्ठतः।)

कर्णः—(कृष्णं पुरःस्थितं विलोक्य किञ्चिदुत्थाय च) ओह! लोकनायक! एतत् त्वया किं कृतम्? अस्त्रहीनोपरि शस्त्रप्रयोगः, एष कीदृशो न्यायः, कश्च धर्मः?

कृष्णः—राधेय! त्वमद्य न्यायं धर्मं वा पृच्छसि? राजसभायां द्रौपद्यास्तथाविधोऽपमानः, द्यूतस्य छद्मना पाण्डवानां राज्यमपहृत्य तेषां जीवनाय तेभ्यः पञ्चग्रामाणामप्यप्रदानम्, अर्जुने दूरस्थे चक्रव्यूहं विधाय एकाकिनस्तत्पुत्रस्य षोडशवर्षीयबालस्याभिन्योरुपरि समस्तकौरवसैन्यानां शस्त्रप्रहारः, निरस्त्रस्य तस्य बालकस्य वधश्च, किमेतत्सर्वं न्यायोऽस्ति, धर्मोऽस्ति? त्वया अन्यायस्य समर्थनं कृतम्, त्वमपि न्यायहीनोऽसि। केनापि विहितस्य सम्मानस्य प्रतिदानमिदं नास्ति यत् स्वीयां समस्तां नैतिकतामपहाय तस्यान्यायस्याधर्मस्य च सर्वात्मना समर्थनं विधीयेत, तत्र सहयोगश्च क्रियेत। तथापीदं सत्यं यत् त्वादृशो वीरः समस्तेऽस्मिन् कौरवदले पाण्डवदले च नास्ति! समाजेन तव प्रतिभायाः क्षमतायाश्च सम्मानो न कृतः। मयापि त्वया सह प्रवञ्चनैव कृतेत्यहमिदानीं सत्येन मनसा स्वीकरोमि। समाजस्त्वामभ्यज्ञास्यच्चेदिदं महाभारतं नाभविष्यत्, दुर्योधनोऽपि पाण्डवानां विपक्षे स्थातुं साहसं नाकरिष्यत्। वीर! सर्वमिदं विपरीतं वृत्तम्, इति त्वं जानासि, मे हृदयं च विजानाति। इदानीं समयो नास्ति। त्वं गच्छसि, आत्मनो वीरताया दानशीलतायाश्च गौरवगाथामितिहासस्य पृष्ठेष्वविस्मरणीयां विधाय गच्छसि। त्वं तत्र गच्छसि यत्र भूतलस्य केनापि प्राणिना स्थानं नाधिगतम्। त्वमात्मनः पितुर्भगवतः सूर्यस्य समीपं गच्छसि, तस्य तेजः प्रखरतरं विधाय गच्छसि। गच्छ। तव पिता त्वां प्रतीक्षते।

वीर ! एकमपरं कथनीयमस्ति—तव वधस्यापराधी अयमर्जुनो न, अहमस्मि। अस्यापराधस्य क्षमामहं तव पितरं भगवन्तं भुवनभास्करं प्रणतिपुरःसरं प्रार्थये। मयाऽपि तव प्रतिभायाः सम्मानो न कृतः; त्वां प्रत्यन्यायः कृतः। एतदर्थमहं त्वामपि क्षमां याचे।

कर्णः—कृष्ण ! मे प्राणाः कण्ठगताः सन्ति। अहमधिकं वक्तुमसमर्थोऽस्मि। केवलमिदमेव मे कथनीयमस्ति यन्मया दुर्योधनस्य मित्रत्वं प्राणव्ययेन निर्व्यूढम्। त्वं तु यया नीत्या पाण्डवानां मित्रताया निर्वाहं करोषि सा खलु कौरवाणां पाण्डवानां चोभयेषामाप्यहिताय सम्पत्स्यते। तदेव ते नीतेरतिमहद् वैफल्यं भविष्यति। अहं गच्छामि। तव क्षमाया या वार्त्ताऽस्ति तामहं भाविनः समाजस्योपरि विहाय गच्छामि। (कर्णस्य शरीरं निश्चेष्टं भूत्वा भूमौ निपतति। कर्णः अर्जुनश्च उभौ परस्परं विलोकयतः।)

कृष्णः—अर्जुन ! त्वमधुना निष्कण्टकोऽसि। मया त्वदर्थं यदिदमनार्यमाचरितं तस्यानुतापस्य सामाजिकावमाननायाश्च यद् विषाक्तं कण्टकं मे हृदयं प्रविष्टमस्ति तेन मे हृदयं दन्दह्यते, दन्धक्ष्यते चाजीवनं तत्। अद्य पृथिव्याः सर्वमहान् दानी, सर्वमहान् शीलवान् चरित्रवांश्च जनो भूतलादुत्थितः। अहमतिशयं दुःखमनुभवामि। कर्णस्य चरितमनुकरणीयमस्ति, तस्य तेजो नमस्यमस्ति, तस्य वीरता वन्दनीयाऽस्ति।

त्यागो दानं क्षमा शीलं सत्यं शौर्यञ्च निश्छलम् !
सर्वमेतद्धि कर्णस्यासमं श्लाघ्य निदर्शनम् ॥५॥

जयतु जयतु दीपः प्रोज्ज्वलन् योऽनलेन
वितरति निजदेहस्य व्ययेन प्रकाशम्।
जयतु जयतु तेजः सर्वलोकातिशायि
क्वचिदपि निवसेत तद् वर्त्तते सर्ववन्द्यम् ॥६॥

(जवनिकापातः)

॥ इति चतुर्थोऽङ्कः ॥

॥ समाप्तमिदम् आचार्य डॉ० व्रनेश्वरपाठककृतं विक्रान्तकर्णं नामाभिनवं सामाजिकं नाटकम् ॥

# शुद्धिपत्रम्

| अशुद्धिः | शुद्धिः | पृ०/पं० |
|---|---|---|
| मुबगम्या | मुपगम्या | ६/२५ |
| पालिस | पालित | १२/६ |
| धोंमऽस्ति | धर्मोऽस्ति | १४/२८ |
| अजुन | अर्जुन | १५/६ |
| यापेक्षितत्व | चापेक्षितत्वं | १५/१६ |
| पुत्रोनाम्ना | पुत्रो नाम्ना | १५/२४ |
| ताद्दशः | तादृशः | १५/२६ |
| दैबाय्यत्त | दैवायत्तं | १६/३ |
| ज्ञानस्य | ज्ञानं च | १६/७ |
| भवनां | भवतां | १६/६ |
| भव्रम्दिः | भवद्भिः | १६/१६ |
| एव | एष | १६/२० |
| एग्र महाव | एष महान् | १६/२३ |
| दसनज्ञा | दमनुशा | १६/२६ |
| हे विश्वम्भर हे | हे विश्वम्भर | १७/३ |
| हेतुत्तीसीत् | हेतुर्नासीत् | १८/१२ |
| संवृतः | संवृत्तः | १८/१७ |
| भवन्न | भवन्त | १६/६ |
| नमस्यो | नभस्यो | २०/१६ |
| नदाति | नदति | २१/२ |
| कठिन | कठिनं | २१/८ |
| गृहणाति | गृह्णाति | २१/१७ |
| अह | अहं | २१/२० |
| सूतपुत्रा | सूतपुत्रौ | २१/२८ |
| भीमार्जुनयोर्वद्ध | भीमार्जुनयोर्वृद्धौ | २१/३० |
| शुद्रस्य | शूद्रस्य | २२/६ |
| शुद्रस्य | शूद्रस्य | २२/७ |
| शुश्रुषा | शुश्रूषा | २२/८ |
| शकुनिऽमे | शकुनिमे | २२/१५ |
| मताभा | महाभा | २३/५ |
| न्यन्येन ता | नान्यायेनाऽथवा | २३/१६ |

| | | |
|---|---|---|
| सम्वान्धिनश्च | सम्बन्धिनश्च | २३/२३ |
| विजयां | विजयतां | २४/१० |
| मार्ज्जितु | मार्जयितु | २४/१७ |
| चेत् | चेत् | २४/२७ |
| प्रतिशोघ | प्रतिशोधं | २५/६ |
| पुशे | पुरो | २५/१० |
| भङ्ग | भङ्गं | २५/१३ |
| प्रश्यास्यहं | पश्याम्यहं | २५/१२ |
| अवश० | अश्व० | २५/२२ |
| परिमार्जन | परिमार्जनं | २५/२६ |
| परयो | परमो | २६/४ |
| गच्छामि | गच्छामि | २६/७ |
| शुनी | शुनो | २६/७ |
| प्रतिक्ष | प्रतीक्ष | २६/१२ |
| नास्वि | नास्ति | २६/१२ |
| विश्वशिश्रो | विश्वविश्रो | २६/२२ |
| सम्पुर | सम्पुट | २६/२४ |
| प्रषंसा | प्रशंसा | २७/११ |
| क्षणिक | क्षणिकं | २७/१८ |
| भवन्त | भवन्तं | २६/२२ |
| देहस्च | देहश्च | २६/२४ |
| ब्रति | ब्रूहि | २८/३ |
| ब्राह्लण | ब्राह्मण | २८/३ |
| कुऽप्यर्थी | कोऽप्यर्थी | २८/१० |
| मर्वेषां | सर्वेषां | २८/२३ |
| स्वशक्षा | स्वशक्त्या | २८/२३ |
| कुरुश्व मास् | कुरुष्व माम् | २८/२४ |
| सूत पुत्र | सूतपुत्रः | ३०/२५ |
| रथचकं | रथचक्रं | ३२/२६ |
| कृष्णास्त | कृष्णस्तं | ३२/२६ |
| तथाविधं | तथाविधं | ३२/२९ |
| स्याभिह्यमे | स्याभिमन्त्रो | ३३/१४ |
| विजातत्रि | विजानाति | ३३/२६ |
| जमतु | जयतु | ३४/२४ |

# लेखकस्यान्याः कृतयः

(प्रकाशिताः)

(१) संस्कृतकाव्यसंग्रहः ...... रामनारायण लाल, वेनीप्रसाद प्रयाग

(२) काव्यसिद्धान्तकौमुदी ......बागला प्रेस, रांची (मुद्रकः)

(३) प्लवङ्गदूतम् (उत्तरप्रदेशशासनेन पुरस्कृतम्) .... सुबोधग्रन्थमाला, रांची

(४) स्वप्नबासवदत्तम् (व्याख्या) .... ,,

(५) रघुवंशम् (त्रयोदशसर्गः (व्याख्या) .... ,,

(६) कुमारसम्भवम् (तृतीयः सर्गः व्याख्या) .... ,,

(७) कुमारसम्भवम् (पञ्चमःसर्गः व्याख्या) .... ,,

(८) किरातार्जुनीयम् (द्वितीयः सर्ग, व्याख्या) .... ,,

(९) पञ्चतन्त्रम् (अपरीक्षितकारकम्) .... ,,

(१०) किरातार्जुनीयम् (प्रथम सर्ग व्याख्या) ज्योति पटना

(११) कालिदासः (एकाङ्किरूपकम्) कामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालयप्रकाशनम् (कालिदासीयोपरूपकाणां समुच्चयः)।

(१२) कविताः शोधनिबन्धाश्च ५० तोप्यधिकाः भारतस्य विभिन्नपत्रिकासु प्रकाशिताः, आकाशवाणीतः प्रसारिताश्च सन्ति।

(१३) दिव्यपक्षी (कविता) वेलजियमदेशस्य (अल्वे) काव्यसंग्रहे प्रकाशिता।

(१४) कालिदास का साहित्य (Bibilography of Kalidass's Literature) ज्योति पटना।

(१५) तवास्मिदासः (अभिनव खण्ड काव्यम्)

(१६) हीरोचरितम् अभिनव काव्यम्)

(१७) धर्म मीमांसा

(१८) योशुचरितम् (बायबिल (न्यू टेस्टामेंट) ग्रन्थस्य संस्कृतपद्यानुवादः)

(१९) काव्यप्रकाश और उसके टीकाकार (रांचीविश्वविद्यालय द्वारा डी० लिट्० इत्युपाधिना सम्मानितः शोधग्रन्थः) प्रकाशनाधीनः।

(२०) कादम्बरी नाटिका

(२१) तर्कसंग्रहः

(२२) चण्डालिका नाटिका

(२३) कारक प्रकरणम् ........................ इत